श्रीहरिः

पदवाक्यप्रमाणपारावारपारीणसर्वतन्त्रस्वतन्त्र

श्रीमत्परमहंसपरिव्राजकाचार्यगोवर्धनमठपुरीपीठाधीश्वर

श्रीमज्जगद्गुरुशङ्कराचार्य

श्रीनिरञ्जनदेवतीर्थस्वामीप्रणीतम्

# वेदार्थपारिजातभाष्यवार्तिकम्

खण्डः १

VEDARTHA-PARIJAT

BHASHYA-VARTIKAM-1

श्रीहरिः

# वेदार्थपारिजातभाष्यवार्तिकम्


प्रणेतारः

श्रीमज्जगद्गुरवः श्रीशङ्कराचार्याः

श्रीनिरञ्जनदेवतीर्थ स्वामि महाभागाः

भूमिकालेखकाः भाषानुवादकाः

अनन्त श्रीसमलङ्कृताः स्वामिनः

श्रीसुखबोधाश्रम महाभागाः

परिशिष्टप्रणेतारः

विद्यावाचस्पतयः चक्रपाणि पदवीभाजः

श्री श्रीकण्ठ शर्माणः



प्रथमं संस्करणम् २०४५ वि०

श्रीः

# Shri Jagadguru Shankaracharya Swami Niranjandeva Teertha's

# Vedartha parijat-BHASHYA-VARTIKAM

Preface and Translation

by

Shri Swami Sukhabodha Ashram

Parishistam

by

Pt. Shri Shreekantha Shastri

Edited With Introduction Notes etc.

by

Swami Nishchalanand Saraswatee

श्रीः

Published by

Shri Govardhan Matha Shankaracharya Peetha

Puri ( Orisa )

India

प्रकाशक:

श्रीगोवर्द्धनमठ जगद्गुरु शङ्कराचार्यपीठ, पुरी ( उड़ीसा )

भगवत्पादाब्द: २५००

वैक्रमाब्द: २०४५

खीष्टाब्द: १९८८



First Impression 1000

Price

Printed by

ANAND KANAN PRESS

CK. 36/20 Dhundhiraj

VARANASI-221001

॥ श्रीहरिः ॥

# दिग्दर्शन

**श्रीस्वामी निश्चलानन्द सरस्वती**

सर्वभूतहृदय धर्मसम्राट् परमहंस परिव्राजकाचार्य अनन्त श्रीस्वामी करपात्र महाभाग ( श्रीहरिहरानन्द सरस्वतीजी महाराज ) द्वारा विरचित 'वेदार्थ पारिजात'—वेदभाष्यभूमिकामें प्रसङ्गानुसार आर्यसमाजके मन्तव्योंका निराकरण किया गया। निराकरणका अभिप्राय वस्तुस्थितिका वास्तविक दिग्दर्शन कराकर सन्मार्गपथके पथिकोंका स्वस्थ मार्गदर्शन ही था। 'वेदार्थ कल्पद्रुम' नामक ग्रन्थ 'वेदार्थ पारिजात' भूमिकाभागके खण्डनमें आर्य-समाजियोंके द्वारा प्रकाशित किया गया। 'वेदार्थ कल्पद्रुम' नाम ही सनातन-सिद्धान्तके अनुरूप और आर्यसमाजके विरूप है। यह ग्रन्थ धर्मसंघ मेरठके वरिष्ठ विद्वान् पदाधिकारियोंके दृष्टिगोचर हुआ। उन्होंने 'वेदार्थ पारिजात'के खण्डनमें प्रयुक्त 'वेदार्थ कल्पद्रुम'के खण्डनको प्रार्थना पूज्यपाद जगद्गुरु शङ्कराचार्य श्रीनिरञ्जनदेवतीर्थ जो महाराज ( पुरी )से की। पूज्य श्री आचार्यचरणोंके हृदयमें 'वेदार्थ पारिजात'पर वार्तिक लिखनेका भाव था। उन्होंने उसी सन्दर्भमें 'वेदार्थ कल्पद्रुम'के निराकरणकी प्रार्थना स्वीकार कर ली।

यद्यपि श्रीचरणोंका कार्यक्रम अत्यधिक व्यस्त रहता था, ग्रन्थ लिखनेके लिये उपयुक्त सामग्रीकी तथा उपयुक्त स्थान पर कुछ समय निवासकी आवश्यकता थी; परन्तु यात्रामें ही उन्होंने श्रीहरि-गुरु-करुणासुलभ अद्भुत प्रतिभाके अमोघ प्रभावसे **'वेदार्थपारिजातभाष्यवार्तिकम्'** लिखना प्रारम्भ कर दिया। देवघर श्रीवैद्यनाथधाम ( बिहार )में धार्मिक महोत्सवमें जब पूज्य श्रीमहाराजश्रीको प्रेरणासे जाना हुआ, तब उन्होंने कई पृष्ठोंकी श्लोकबद्ध सामग्रीका श्रवण और अनुशीलन कराया। उनके उत्साह, वैदुष्य और उनकी प्रतिभासे अद्भुत प्रसन्नता हुई।

चातुर्मास्यमें उन्हींके सान्निध्यमें बम्बई निवासका योग सधा। श्रीपूज्य स्वामी सुखबोधाश्रमजी महाराज (अनूपशहर, उ० प्र०) और पण्डितप्रवर श्रद्धेय श्री श्रीकण्ठशर्माजी (अमृतसर) शास्त्रचर्चा और सत्संगमें सम्मिलित होनेके लिए पधारे। प्रसङ्गानुसार श्रीचरणोंने वार्तिकके अवलोकनकी प्रेरणा दोनों महानुभावोंको प्रदान की। पूज्यपाद श्रीस्वामी सुखबोधाश्रमजी महाराजके हृदयमें वार्तिकपर 'भूमिका' लिखनेकी और श्रीश्रद्धेय श्रीपण्डितप्रवर श्रीकण्ठ शास्त्रीजीके हृदयमें 'परिशिष्ट' लिखनेकी तथा मेरे हृदयमें दार्शनिक स्थलोंपर 'टिप्पणी' लिखनेकी भावना उदित हुई। पूज्य श्री शङ्कराचार्य महाराजने श्री स्वामीजी महाराजको भाषानुवादका दायित्व सौंपा।

शनैः शनैः सब कार्य पूर्ण हुए। "ग्रन्थ प्रकाशनमें जो भी धन व्यय होगा, मैं स्वयं ही वहन करूंगा। इसके लिये किसीसे कुछ कहनेकी आवश्यकता नहीं। ऐसा आश्वासन श्री आचार्यचरणोंसे प्राप्त हुआ। श्रद्धेय श्री विपिनचन्द्रानन्द सरस्वती 'श्रीजजस्वामीजी'से प्रेसके सम्बन्धमें विचार-विमर्श हुआ। उनकी



प्रेरणासे श्री पं० विश्वम्भरनाथ द्विवेदीजी 'श्री बाबाजी' आनन्दकानन प्रेस, वाराणसीमें ग्रन्थ छापनेके लिये तैयार हो गये। यद्यपि उन्हें इस कार्यमें पर्याप्त दुर्गम घाटियोंका सामना करना पड़ा। कई ढंगके हस्तलेखोंको समझना और समझाना, प्रूफरीडिंग करना, पुनः रीडिंगके लिये श्रीवाराणसीसे श्रीवृन्दावन मेरे पास सामग्री भेजना, वृन्दावनमें मेरे न मिलनेपर अन्यत्र व्यक्ति भेजकर मुझसे संपर्ककर कार्य सम्पन्न करना—पूज्यपाद श्रीजगद्गुरुजी महाराज और श्रद्धेय श्रीजजस्वामीजी आदिके प्रति श्रीद्विवेदीजीकी अगाध आस्थाका ही द्योतक है।

भूमिकाभागके प्रूफ रीडिंगमें श्रद्धेय श्रीस्वामी चिन्मयानन्द सरस्वतीजी (वृन्दावन) का जो योग प्राप्त हुआ, वह प्रशंसनीय है। कार्य सुगमतापूर्वक और यथासम्भव शीघ्र सम्पन्न हो, इस अभिप्रायसे पूज्य चरणोंने श्री पं० लालबिहारी जी शास्त्री (वाराणसी) को प्रूफ देखनेके लिये प्रेरित किया। उन्होंने पृ० ६६ से १४५ तक प्रूफ शोधनकार्य सम्पन्न किया।

'परिशिष्ट भाग' हस्तलिखित और टाइप किया हुआ—दो रूपोंमें प्राप्त हुआ था। हस्तलिखितको ठीक-ठीक समझ पाना कठिन हो रहा था। टाइपवाली सामग्री और हस्तलिखितमें व्यास-समासशैलीको लेकर पर्याप्त अन्तर भी था। टाइपवाली प्रतिमें पर्याप्त अशुद्धियाँ रह गयी थीं। जिनका शोधन हस्तलिखित प्रतिसे यथासंभव तालमेल मिलाकर ही संभव था। इस दुरूह ग्रन्थिको सुलझानेके लिए श्री द्विवेदीजी स्वयं वाराणसीसे वृन्दावन आये। दैवयोगसे मैं इन्दौर था। वहाँ व्यक्तिको भेजा गया। प्रेस बन्द पड़ा था। कार्य शीघ्र निपटाना था। शीघ्र ही निपटाया भी गया।

इन सब परिस्थितियोंमें भी ग्रन्थका उत्तमरीतिसे छप पाना, श्री भगवान् चन्द्रमौलीश्वरकी अनुकम्पाका अमोघ फल है। भगवत्कृपाका अनुदर्शन करते हुए हम इस कार्यके लिए पूज्यपाद श्रीजगद्गुरु शङ्कराचार्य पुरी-पीठाधीश्वरजी महाराज पूज्यपाद श्रीस्वामी सुखबोधाश्रमजी महाराज, श्रीश्रद्धेय पं० श्रीकण्ठ शास्त्रीजी, श्रद्धेय श्रीस्वामी चिन्मयानन्द सरस्वतीजी, श्रद्धेय श्रीस्वामी विपिन-चन्द्रानन्द सरस्वतीजी, श्रद्धेय पं० श्री लालबिहारीजी और श्री विश्वम्भरनाथ द्विवेदीजी तथा अ० भा० धर्मसंघ मेरठके वरिष्ठ पदाधिकारियोंका हृदयसे अभिनन्दन करते हैं।

धर्म, दर्शन आदिमें आस्था रखनेवाले विचारकों और सत्यान्वेषी विद्वानोंके लिये यह ग्रन्थ वरदान स्वरूप है।

शुक्लयजुर्वेद वाजसनेयि माध्यन्दिनके प्रथम और अन्तिम ( ४० वाँ, ईशावास्योपनिषत् ) अध्याय पर धर्मसम्राट् श्रीस्वामी करपात्रमहाभाग द्वारा विरचित 'वेदार्थपारिजात' नामक भाष्य सानुवाद धानुका-निवास रमणरेती, वृन्दावन, मथुरा, उ० प्र० से प्रकाशित हुआ है, वह अनुशीलन करने योग्य है। दोनों भागोंमें नीरक्षीरविवेकन्यायसे जो श्रीदयानन्द सरस्वतीजीके मन्तव्योंका प्रामाणिकरीतिसे निराकरण किया गया है, वह परिशीलन करने योग्य है। •

श्रीहरिः

# वेदार्थपारिजातभाष्यवार्तिकम्

## भागः-१

### निर्देशिका



### परिशिष्टम्



॥ श्रीः ॥

# वेदार्थपारिजातभाष्यवार्तिकम्

## भूमिकाभागः

वैराग्यं यस्य बाल्ये वयसि विकसितं येन तप्तं तपस्तत्
स्त्रीपुंसैः प्रेक्षितं यत् तरुणिमनि महत् दत्तदन्ताङ्गुलीकैः ।
वैदुष्यं सर्वशास्त्रेष्वपि विदितचरं विश्रुतं यस्य लोके
सोऽयं 'श्रीपाणिपात्रो' जयति 'हरिहरानन्द'नामा यतीन्द्रः ॥ १ ॥
पौरस्त्यैर्दाक्षिणात्यैः सकलबुधवरैर्यस्य कीर्तेः पताका
पाश्चात्यैरुत्तरस्थैर्दिशि विदिशि धृता सर्वलोकोर्ध्वभागे ।
वेदार्थः पारिजाते श्रुतिभिरभिमतो दर्शितो येन साक्षात्
पञ्चास्यं जेतुमेनं कथमिव यतते मिश्रसंज्ञः श्रृगालः ॥ २ ॥

नैकश्रीसमलङ्कृतैर्हरिहराद्वैतप्रतीकैः सदा
सर्वत्र श्रुतिदूषकाः प्रविजिता यैर्वेदवादाहवे ।
चित्तं तज्जयशङ्खनादमतुलं तेषां परोक्षेऽधुना
जेतुं वाञ्छति कर्णकाटवपटुर्बालेयकण्ठध्वनिः ॥ ३ ॥
अप्ययं मिश्रकुलजो गर्वोक्तिभिरनादरम् ।
ब्रह्मनिर्वाणमाप्तानां चतुर्थाश्रमिणां सताम् ॥ ४ ॥
वाग्देवतावताराणां तपश्चर्यारतात्मनाम् ।
विद्वत्सेव्याङ्घ्रिपद्मानां वेदवेदाङ्गभास्वताम् ॥ ५ ॥
नास्तिकेभमृगेन्द्राणां ब्राह्मीं स्थितिमुपेयुषाम् ।
करपात्रयतीनां यत् परोक्षे कृतवान् भृशम् ॥ ६ ॥
तन्न चित्रं विनियति मृगराजेऽकुतो भयाः ।
माद्यन्त्यः किन्न चेष्टन्ते यथेष्टं मृगजातयः ॥ ७ ॥
आश्चर्यमिदमत्यन्तं विद्वद्भिर्बोधिता अपि ।
दयानन्दग्रहाविष्टा न त्यजन्ति दुराग्रहम् ॥ ८ ॥
लौकिकालौकिकश्रेयोमार्गविच्युतबुद्धयः ।
निन्दन्ति नाभिनन्दन्ति वेदविद्याविदां वरान् ॥ ९ ॥
करामलकवज्ज्ञानं निर्भ्रान्तं दोषवर्जितम् ।
येषां द्रुह्यन्ति तेभ्योऽपि मदमात्सर्यदूषिताः ॥१०॥

मुद्रणाशुद्धयोऽप्यस्य मते मूलकृतोऽभवन् ।
संख्याताभ्योऽप्यसंख्याताः सन्ति कल्पद्रुमे तु ताः ॥११॥
सरस्वत्यै गणेशायेत्यत्र यद् दृष्टवान् भवान् ।
विसर्गं, मुद्रणाशुद्धिः सेयं स्पष्टं विलोक्यते ॥१२॥
किन्तु न्यायादपेतेन भवता सा पुरस्कृता ।
ग्रन्थकृद्योग्यताक्षेपो न स योग्यः सतां मते ॥१३॥
वयं नैवं करिष्यामो दर्शयिष्यामहे पृथक् ।
कल्पद्रुमस्य स्खलितीः—व्युत्पत्तिविपरीतगाः ॥१४॥
मुद्रणाशुद्धयो यास्तु ताः स्फुटं दृष्टिगोचराः ।
भवन्तीत्येव ताः सर्वाः-न स्प्रक्ष्यामः कथञ्चन ॥१५॥
चकास्त्ययोग्यता यासु मिश्रबन्धोः स्फुटं हि ताः ।
काश्चिदेवात्र दर्श्यन्ते सन्मनोरञ्जनेच्छया ॥१६॥
दर्शने परदोषाणां न सतां यद्यपि स्पृहा ।
तथापीच्छन्ति सन्मार्गं स चासज्ज्ञानपूर्वकः ॥१७॥
गीतायां भगवान् कृष्णो विश्वकल्याणकारिणीम् ।
यथैव सम्पदं दैवीं वर्णयत्येवमासुरीम् ॥१८॥
लोकसंग्रहमिच्छन्तः सन्तः सन्मार्गबोधकाः ।
तित्याजयिषया मार्गं दर्शयन्त्यसतामपि ॥१९॥
अथास्य स्खलितीः स्थूलाः स्फुटीकुर्मो यथा बुधाः ।
जानीयुः क्षमतामेष वेत्तु दुःसाहसं निजम् ॥२०॥
वेदार्थपारिजातस्य खण्डने यः प्रवर्तते ।
कीदृशी योग्यता तस्येत्येतत् पश्यन्तु पण्डिताः ॥२१॥
दयानन्दमते यत्र स्वर्गो नापि च देवताः ।
भूमण्डलस्था विद्वांस एव देवा नहीतरे ॥२२॥
न देवतरवः केचित् नास्ति कल्पद्रुमः क्वचित् ।
ग्रन्थे कल्पद्रुमारोपस्तस्मादस्ति मतिभ्रमात् ॥२३॥
ग्रन्थस्य नामैव निराश्रयं सत्
स्वार्थं कथं साधयितुं क्षमेत ।
न सौरभं स्याद् गगनारविन्दे
न साधयेत् साध्यमसिद्धहेतुः ॥२४॥





श्रीमन्तः करपात्रास्तु स्वर्गं तत्रत्यनन्दनम् ।
स्वीकुर्वतेऽतस्तद्ग्रन्थः पारिजातस्तु सार्थकः ॥२५॥
द्वारिकायां स चानीतः कृष्णेनेति कथामपि ।
पारिजातस्य मन्यन्ते वेदार्थः स इति ध्रुवम् ॥२६॥
वेदार्थकल्पद्रुमरूपकेऽस्मिन्
अङ्गानि सर्वाण्युचितानि किन्तु ।
'स्कन्धप्रमाणैरि'ति तद्विरुद्धम्
उपक्रमात्तेऽपि च काव्यदृष्टेः ॥२७॥

( अथवा )

लोके कल्पद्रुमाभावात् रूपकस्यानवस्थितेः ।
युक्तायुक्तत्वचिन्तेयमयुक्ता गुडगोमये ॥२८॥
पितामहस्ते ननु हेमराजः
शास्त्रेषु नासीत् कुशलो यतस्त्वम् ।
तदात्मजं स्वं पितरम्-त्वयोध्या
प्रसादमेवाकथयः प्रवीणम् ॥२९॥
श्री निर्मलाऽतोऽन्ववदन्नसम्यक्
या हेमराजं कुशलं न्यगादीत् ।
व्यानक् भवान् वा न कथं सुशीलाम्
अर्धाङ्गिनीं स्वां स्फुटमत्र पद्ये ॥३०॥

पादाद्यं प्रथमोऽस्ति, पद्यघटकः श्रीमन्मुखादीरितः
'आनन्दान्तविशुद्धनामक' इयञ्चार्धाङ्गिनी निर्मला ।
'साहित्याम्बुधिपारगे'ति चरणे कृत्वा प्रशंसां पुनः
तस्याः वचान्वय इत्यवैन्न तु भवान् पद्ये द्वितीये ततः ॥३१॥
'पत्नी यस्य च निर्मले'ति पुनरप्येनामुपन्यस्तवान्
'यद्बाला अपि सेवकैः सह सदा स्वां मातृभाषामिव ।
भाषन्ते' तदिदं पुनः 'सुरगिरामाश्रित्य संशोभते'
साकांक्षं भवतीह काव्यसरणेर्भ्रष्टं ततस्त्वद्वचः ॥३२॥
विप्रोऽविप्रियकारको जनिजुषोऽयोध्याप्रसादः सुधी-
रित्यत्रापि पदं पदं 'जनिजुषो' नैतत् क्वचिल्लभ्भते ।

व्यर्थैः केवलपादपूर्तिफलकैः प्रायश्चकारादिभिः
स्वाशक्तिं प्रकटीकरोषि न पुनर्जिह्रेष्यहो धृष्टता ॥३३॥
केवलं न तवैवेयमशक्तिः कविकर्मणि ।
दयानन्दोऽप्यशक्तिं स्वां प्रकटीकृतवान् पुरा ॥३४॥
तेनापि भूमिकारम्भे नाम निर्दिष्टमात्मनः ।
'दयाया' इति षष्ठ्यन्तं दर्शितं विग्रहे पृथक् ॥३५॥
प्रथमान्तमथानन्दपदं भिन्नं ततः कृतम् ।
न ज्ञातमित्थं संज्ञायाः संज्ञात्वमपलप्यते ॥३६॥
सरस्वत्यपि चास्याग्रे वसतीत्युक्तमादरात् ।
विस्मृतं, यदहं नैव मन्ये देवीं सरस्वतीम् ॥३७॥

( अथवा )

ऋषिं दयानन्दसरस्वतीसुतं-प्रमोदलोकात् समनोदयद्धरिः ।
यदेतदुक्तं हृदयेन तद् ध्रुवं पुराणगाथास्वपि विश्वसित्यसौ ॥३८॥
स्कन्धेऽष्टमे 'भागवते' कथामिमाम्—
अश्रावयत् व्याससुतः परीक्षितम् ॥
जातो हरिण्यां हरिमेधसो हरिः—
गजाधिपं ग्राहमुखादमूमुचत् ॥३९॥
विष्णोरिदं नाम ततः प्रवृत्तम्
सम्मानितं मिश्रवरेण यस्मात् ।
तस्यावतारः परमेश्वरस्य
स्वभावतः स्वीकृत एव तस्मात् ॥४०॥
ग्रन्थस्य कल्पद्रुमरूपकत्वम्
पौराणिकत्वात्तव युक्तमेव ॥
स्वर्गाद् दयानन्दसुतं पृथिव्याम्
उत्तार्य चाङ्गीकृत एव नाकः ॥४१॥
सुतो 'दयानन्द' इति त्वया यदा
हरेरगाद्येष सरस्वतीसुतः ॥
समस्तमप्यार्यसमाजसम्मतम्
निराकृतं तत्करपात्रिणो जयः ॥४२॥





वैदिकानेव नः सर्वान् ब्रूते पौराणिकांस्तु यः
पौराणिकः स एवैवं साधितो वैदिकब्रुवः ॥४३॥
पौराणिकत्वमस्माकं वैदिकत्वप्रयोजकम् ।
न पुराणैर्विना कश्चिद्वेदार्थं वेत्तुमर्हति ॥४४॥
यो न वेत्ति पुराणानि तद्रहस्यं च मूढधीः ।
वेदार्थबोधवैकल्यादसौ वेदविदूषकः ॥४५॥

"इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्—
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ।"
प्राचीनोक्तिरियं साध्वी वेदबोधप्रवर्तिका
ये न पौराणिकास्ते वै न कथञ्चन वैदिकाः ॥४६॥
दृष्ट्वा स्थविष्ठयैवैतत्-मध्यतोऽप्यादितोऽन्ततः ।
कुतश्चित् किञ्चिदुद्धृत्य मनागेव निरीक्षितम् ॥४७॥
सिंहावलोकनन्यायमाश्रित्य पुनरप्ययम् ।
कल्पद्रुमाभिधो ग्रन्थो मिश्रोपज्ञोऽवलोक्यते ॥४८॥
ग्रन्थस्यास्य शिरोभागे 'राष्ट्रीय' इति नोचितम् ।
मक्षिकाभक्षणं ग्रासे प्रथमे न क्षमास्पदम् ॥४९॥
मुद्रणाशुद्धिरेषेति शक्यते वक्तुमप्यलम् ।
पाणिनीयस्य सूत्रस्य स्मृत्यभावोऽत्र कारणम् ॥५०॥
राष्ट्र शब्दात् विशेषेण 'घ' प्रत्ययविधानतः ।
इयादेशे पुनर्घस्य 'राष्ट्रिये'ति समञ्जसम् ॥५१॥
विशुद्धानन्दमिश्रस्य श्लोको यः परिचायकः ।
तच्चित्राधोऽङ्कितस्तावत् स इदानीं परीक्ष्यते ॥५२॥
द्वितीयचरणे 'नाम्ना' तृतीयान्तेन सूचिता ।
विशुद्धमिश्रपदवी यानन्दान्ता च कीर्तिता ॥५३॥
श्रुत्वैवामङ्गलं चेतश्चेखिदीति सचेतसाम् ।
श्रोतृणां सुखवृद्धिः स्यात् दुःखान्ता यदि सा भवेत् ॥५४॥
विशुद्धशब्दमाकृष्य तत्र चेद्विनियोज्यते ।
'आनन्द'स्तर्हि नामैतत् पदव्यन्तं न युज्यते ॥५५॥
पदव्या मिश्रितं नाम मिश्रस्य यदि युज्यते ।
तर्हि नास्त्यन्तरं किञ्चिन्मिश्रेऽपि च विदूषके ॥५६॥

मुखपृष्ठस्थ पद्यस्य कृतमेतद्विवेचनम् ।
पश्यन्तु योग्यतां पद्ये निर्मलापरिचायके ॥५७॥
द्वितीयचरणे वाक्यं समाप्तं व्यवधाय तत् ।
तृतीयेन पुनस्तुर्ये 'गिरे'त्यत्र समन्वितम् ॥५८॥

समर्पितेरधस्ताद्यलिखितं मातृपित्रिति ।
मातापित्रिति वक्तव्यं सौत्रादानङ्विधेर्बलात् ॥५९॥
'प्राग्वाचि' पदमस्त्येकमुवङा दूषितं हि तत् ।
गुणेना'चिनवम्' युक्तं पाणिनीयं तथा भवेत् ॥६०॥

यच्च जरी जागर्तीत्युक्तं युक्तं न तद् भवेत् किन्तु ।
'जजागरीती'त्येतत् प्रक्रियया यङ्लुगन्तस्य ॥६१॥
दृगपि" प्राक्तना" प्रोक्ता वक्तव्या प्राक्तनीति सा ।
टित्वात् 'टिड्ढाणञ्'त्येतत् ङीप् प्रत्ययविधानतः ॥६२॥
"सरूपा" इति यल्लेख्यं "स्वरूपा" लिखितं हि तत् ।
'शक्ष्यन्ती'त्यस्य च स्थाने "शक्ष्यन्त" इति नोचितम् ॥६३॥

शून्ये स्वगतभेदेन ब्रह्मणि प्रतिपादितम् ।
यद्वे स्वगतशून्यत्वं कथं तत्स्यात् क्षमास्पदम् ॥६४॥
'पराजयन्त विदुष' इत्येतत् स्पष्टमाह यत् ।
भवकांस्तत्तथैवास्तीत्यौदार्यं व्यजते तव ॥६५॥
यत् 'पराजेरसोढो'ऽस्ति सूत्रं श्रीपाणिनेर्मुनेः ।
पञ्चमी क्रियते तेनासह्योऽर्थेऽतः स्फुटीकृतः ॥६६॥
पराजयः समस्तानां दयानन्दानुयायिनाम् ।
समाजिकानां विदुषामेकस्माद् विदुषो हि नः ॥६७॥

श्री सुरेन्द्र कुमार ! त्वं यदिदं सत्यमुक्तवान् ।
तदर्थं धन्यवादार्हो गुणगृह्या यतो वयम् ॥६८॥
पृष्ठानां पञ्चदशकं यावदेवेदृशीं दशाम् ।
दृष्ट्वा नाग्रेतनं ग्रन्थं द्रष्टुमीहा प्रवर्तते ॥६९॥
पादोनषष्टिशतकं पृष्ठानां यत्र वर्तते ।
तत्रैतावति चेद्ग्रन्थे स्थविष्ठाः सन्त्यशुद्धयः ॥७०॥
न मिश्रेण न तत्सख्या समाधातुमिमाः क्षमाः ।
प्रदर्शनादशुद्धीनामेतस्मादुपरम्यते ॥७१॥





वेदाङ्गेष्वस्य वैदग्ध्यं तदा मंस्यामहे वयम् ।
समाहिताः स्युरेतेन निर्दिष्टा यद्यशुद्धयः ॥७२॥
शुद्धमुच्चारणं कुर्याद्वेदानां यद्ययं सुधीः ।
वेदज्ञाननिधिस्तर्हि स्वीकार्यस्तावता भवेत् ॥७३॥

विद्वद्भ्यो येभ्य एवेमे लब्धशिक्षा भवन्त्यहो !
निर्लज्जा जेतुमेवैतान् पास्पर्धति गुरुद्रुहः ॥७४॥
पादपद्मरजो येषां श्रद्धया मूर्ध्नि धारयन् ।
वेदमध्यैष्ट तानेव दयानन्दो जुहाव हा ॥७५॥

श्रद्धानन्देन यच्चापि स्थापितं 'कांगड़ी' स्थले ।
गंगातटे गुरुकुलं तत्रासीत् प्रथमो गुरुः ॥७६॥
सर्वतन्त्रस्वतन्त्रः श्रीकाशीनाथो निधिर्गिराम् ।
विश्वेश्वराद्यास्तत्रत्याः स्नातकाः प्रथमेऽभवन् ॥७७॥

काशीनाथो दयानन्दविषये यदवोचत ।
तदिदं प्रस्तुवन् 'मिश्र' मिथ्यावादान् ब्रुवेऽधुना ॥७८॥
करपात्रप्रतापाग्निज्वालाभिः संज्वरन्निव ।
दाहासहिष्णुरश्राव्यमवाच्यं पर्यभाषत ॥७९॥

"करपात्रेण सदृशोऽसूयको दुर्जनो द्विषन् ।
शास्त्रेष्वास्थाविरहितो न भूतो न भविष्यति ॥८०॥
केनापि नाद्यपर्यन्तं खण्डनाय प्रतिश्रुता ।
दयानन्देन रचिता-ऋग्वेदादिकभूमिका ॥"८१॥

मिथ्याभाषणमेतस्य मिश्रस्यैतत् परीक्ष्यताम् ।
कैश्चिद्वराटकैः क्रीतो विवल्गति निरर्गलम् ॥८२॥
वेदार्थकल्पद्रुम नामके स्वग्रन्थेऽकरोदेष बहून् प्रलापान् ।
प्रख्यापितं जन्म कुले भृगूणामनेन नैजं न पुनर्ललज्जे ॥८३॥
जातिर्दयानन्दमते स्थितानां न जन्मना स्यात् सुवचा कथंचित् ।
जातिं प्रतिष्ठापयितुं यदीच्छा तदा दयानन्दमतं जहीहि ॥८४॥

(मिश्रमिथ्योक्तिः)

परेतभूमिगतस्य दयानन्दस्य षट्त्रिंशद्वर्षेष्वतीतेषु सदाचारमूर्तिना श्री पं० घनश्यामदास-शर्म्मणा ( प्रोफैसर सैण्ट जौंस कालेज आगरा ) विरचितम्-ऋग्वेदादिभाष्यभूमिकाखण्डन-

मतिविस्तृतं प्रकाशितं विद्यते । तत्र गुरुकुलकांगड़ी प्रथमगुरूणामगाधमेधानां सर्वतन्त्रापर-तन्त्राणां श्रीकाशीनाथमहानुभावानां निम्नांकिता सम्मतिः ।

अथेदं विदितमस्तु—

'सैण्ट जॉंस कालेज'संज्ञकमहाविद्यालयसंस्कृत निपुणाध्यापकेन सनातनधर्मोद्धारगृहीत-दीक्षेण 'इटावा'नगरीयविद्यापीठमहोपदेशकेन सनाढ्यविप्रमण्डलीलब्धप्रतिष्ठेन—

आगरानगरमङ्गलकुर्वता श्रीयुतपण्डितवरघनश्यामशर्मणा निर्मितः स्वामिदयानन्द-सरस्वतीसम्पादित ऋग्वेदादिभाष्यभूमिकाखण्डनरूपो भूमिकाधिक्कारापरपर्यायो भूमिका-भासनामायं ग्रन्थः सनातनधर्मतत्त्वं बुभुत्सूनां महोपकारीति प्रचारार्हः। अत्र हि—ऋग्वेदादिभाष्यभूमिका कृतो महदज्ञानं दर्शितमिति परामृशति—बलियाप्रान्तनिविष्ट 'छाता' ग्रामवास्तव्योऽधुना काशीवासी काशीनाथ इति ॥

३०० पृष्ठपरिमितोऽयं संस्कृतग्रन्थो हिन्दीभाषायामप्यनूदितः । वर्तमानोऽस्माकं सविधे । अस्य भूमिकाभासस्य 'निवेदन'शीर्षके श्री पण्डितवर उमापति द्विवेदस्य प्रसिद्धे सनातन-धर्मोद्धारग्रन्थे निबद्धं 'वेदविषयविचार'—प्रकरणमाश्रित्य २ पृष्ठतः ९ पृष्ठपर्यन्तं संस्कृते स्वामिदयानन्दकृतं वेदविषयविचारस्य कणशः खण्डनं कृतम् ।

वर्तमानसमयात् वर्षशतकपूर्वसन्निधौ मुरादाबादवासी श्री पं॰ ज्वालाप्रसादमिश्रः दयानन्दीय सत्यार्थप्रकाशप्रत्याख्यानात्मकं 'दयानन्दतिमिरभास्कर' नाम ग्रन्थं जग्रन्थ । ततः पश्चात् श्री कालूरामप्रभृतयोऽनेके लब्धवर्णाः "आर्यसमाज की मौत", "दयानन्द छल-कपट-दर्पणादी"ननेकान् निबन्धान् निबबन्धुः ।

ग्रन्थेष्वेषु दयानन्दसिद्धान्तास्तिलशो निष्पिष्टाः । तथाप्ययं मिश्रबन्धुर्विशुद्धानन्दः स्वकीये ग्रन्थे हिन्दीभाषामाश्रित्य लिखति—

"मेरा विचार है कि अब तक कोई अन्य इतना असूयक—द्वेषी विद्वान् नहीं हुआ जिसने ऋग्वेदादिभाष्यभूमिका के वर्ण-पद-वाक्य सभी को तुच्छ—अविचारित कहने का ऐसा दुःसाहस किया हो, जैसे कि करपात्री जी ने तलछट-खण्डन की प्रतिज्ञा की है। उन्होंने अपनी रूढिग्रस्त पौराणिक धारणाओं से अभिभूत होकर अन्धविश्वासी अपने भक्तों में अपने पाण्डित्य की धाक जमाने के लिये स्वामि दयानन्दीय-सिद्धान्तों का खण्डन किया है । इन्हें शास्त्रों पर आस्था तथा विश्वास नहीं है । इत्यादि"······ ।

पश्यन्त्वेतस्य दौरात्म्यं मिश्रबन्धोः परिस्फुटम् ।
योऽयं श्रीकरपात्रेषु निर्दोषेष्वपि दोषदृक् ॥८५॥





ग्रन्थेऽस्मिन् पूर्वनिर्दिष्टे भूमिकाभाससंज्ञके ।
दयानन्दमतं ध्वस्तं यथा तद् दर्शयाम्यहम् ॥८६॥
सारांशोऽपि न सुशको वक्तुं सर्वैः कथञ्चनाप्यत्र ।
दिङ्मात्रमेव किञ्चित् दृष्ट्वा तुष्टान्तु समनस्काः ॥८७॥
मिश्रवरेण यदुक्तं करपात्रमृते न कोऽप्यभूदीदृक् ।
तदिदं मिथ्यावदतीत्येतावदिहास्ति बोद्धव्यम् ॥८८॥
श्लोकाष्टकेन मङ्गलमाचरितं यद्धि भूमिकारम्भे ।
पृष्ठैः षोडशभिस्तत् प्रत्युक्तं भूमिकाभासे ॥८९॥

( तथाहि )

'ऋग्वेदादिभाष्यभूमिका'भिधं ग्रन्थमारिप्सुर्मुण्डी दयानन्दो दयालोः परेशस्य मङ्गल-मूर्तेर्भगवतः स्मरणव्याजेन कानिचित् पद्यानि ग्रन्थादावेव जग्रन्थ । तत्र—

ब्रह्मानन्तमनादिविश्वकृदजं सत्यं परं शाश्वतम्
विद्या यस्य सनातनी निगमभृद् वैधर्म्यविध्वंसिनी ।
वेदाख्या विमला हिता हि जगते नृभ्यः सुभाग्यप्रदा
तन्नत्वा निगमार्थभाष्यमतिना भाष्यंतु तन्तन्यते ॥१॥

इति, अयमस्ति तत्कृतौ साक्षान्मङ्गलरूप एवादिमः श्लोको यस्यावलोकनमात्रेण सकृदेव प्रकटीभवति सहृदयहृदयता, परिचीयते च साहित्यशास्त्रपरिज्ञानम् संस्तूयते खलु वेदभाष्यसम्पादनयोग्यता तस्य महाभागस्य ।

अहो ! प्रथमग्रास एव मक्षिकाविनिपातः । हा हन्त ! शब्दार्थबुद्धिलतिकागुणविताने दण्डिनोऽस्यौद्दण्ड्य-दण्डप्रहारः । अयि विविधशास्त्रकलाकलापमर्मज्ञाः विज्ञाः श्रीमन्तो भवन्तोऽप्यत्र मनाग्दत्तावधानाः पद्यमिदं विचारयन्तु—यद् भगवतो ब्रह्मणोऽनादिविशेषणं कृत्वापि किम्फलकन्तावदजविशेषणं व्याजहार । तथा त्रिकालाबाधितस्वरूपप्रवृत्तिनिमित्तकेन सत्यत्वेन विशेष्यापि शाश्वतपदं किमर्थं निहितवान् । विमला जगते हिता वेदाख्या विद्या स्वतो भिन्नान् कांस्कान् निगमान् बिभर्तीत्यपि विचारणीयम् । 'हि', 'तु' शब्दौ च किमर्थमुपन्यस्तौ ? निगमार्थभाष्यमतिनेत्यत्र निगमार्थस्य भाष्ये कामना उत निगमभाष्ये ? आद्ये चेत् किं कृतः सोऽर्थो यस्य भाष्यचिकीर्षा-जागरूकतामाप तत्र भवद्हृदये । किञ्च तदर्थभाष्यं किंस्वरूपकमित्यपि जिज्ञासास्पदम् ? निगमस्य भाष्य एव यदि सा तदा 'अर्थ' शब्देनान्तर्गडुभूतेन किं कृतम् । किमतिपल्लवितेन भूयस्सु केवलेऽपि पद्ये शब्दार्थदोषबाहुल्ये-नाभिभूय शोच्यतां नीता भगवतो कविता यदवलोकनजातदयावशंवदा वयं त्वरितमेव सकरोत्क्षेपं समुत्कण्ठं च भावविदा विदुषः प्रतिवदामः—

"कविताकामिनीं हन्त ! रसभावविदः प्रियाम् ।
कोऽपि कामातुरो ग्राम्यो दुनोति श्रूयतामियम् ॥"
कालरामाङ्कचन्द्रेऽब्दे भाद्रमासे सिते दले ।
प्रतिपद्यादित्यवारे भाष्यारम्भः कृतो मया ॥ २ ॥

इत्यनेनापि तदीयद्वितीयवृत्तेन वृत्तप्रायमेव वैदुष्यं स्वामिमहोदयस्य—'कालरामाङ्कचन्द्रमितेऽब्दे'-इति वक्तव्ये कालादिभिरेव केवलैः समुद्युङ्क्ते विबोधयितुं वत्सरमानम् । विचित्रेयं मस्करिणोऽस्य वचोभङ्गिः, अद्भुतं च कवितासाहसिक्यम् छन्दःपरिज्ञानेऽप्यप्रभवन् कथं नाम झटिति कवने प्रवृत्तिं विदध्यात् यदि कश्चिद्भवेत् सविचारः । 'प्रतिपद्यादित्यवारे' चरणेऽत्र पञ्चमाक्षरं गुरुतां प्रापयतावहेलितोऽनेन भगवान् पिङ्गलाचार्योऽपि यः सर्वत्र श्लोके पञ्चमं वर्णं लघूकर्तुं समादिदेश । 'भाष्यारम्भः कृतो मये'त्यत्रापि प्रष्टव्याः श्रीमच्चरणाः, किमारम्भ शब्द आद्यकृतिं नावबोधयति यत्तत्र कृत इत्युक्तम् । 'भाष्यमारभ्यते मया' इति तु सुवचम् ।

दयाया आनन्दो विलसति परः स्वात्मविदितः
सरस्वत्यस्याग्रे निवसति हिता हीशशरणा ।
इयं ख्यातिर्यस्य प्रततसुगुणा वेदमनना-
स्त्यनेनेदं भाष्यं रचितमिति बोद्धव्यमनघाः ॥३॥

इत्ययं तृतीयस्तदीयः श्लोकः । अस्य च—दयायाः परः स्वात्मविदित आनन्दो विलसति—अस्याग्रे हिता हि ईशशरणा सरस्वती निवसति—यस्य प्रततसुगुणा वेदमनना इयं ख्यातिरस्ति—अनेनेदं भाष्यं रचितमिति अनघा बोद्धव्यमित्येवान्वयः । शिखरिणीयं रहसि समुपविश्य समाहितचेतसा तत्र भवता व्यरचीति प्रतिभाति । अन्यथा दुर्ज्ञेयाकूतविशेषजुष्टं दुरधिगतसम्बन्धपदालिविशिष्टं कथङ्कारं काव्यवस्तु तादृशं प्रादुर्भवेत्—शास्त्रदृशैरस्मादृशैश्चिरं बहु सावधान-विचारितमपीदं न स्फुटार्थमभूत् । किञ्च आनन्दस्य स्वात्मविदितत्वमपि नाद्यावधि प्रतिपन्नम् । किमानन्दशब्दः स्वात्मविदितस्तदर्थो वा ? शब्दश्चेत्-तत्प्रकारविदितेभ्यस्तदतिरिक्तशब्देभ्यः को विशेषस्तत्रयत्तदुपन्यासः । अर्थश्चेत् स्वात्मविदितस्तर्हिकृतं शब्देन निष्प्रयोजनेन । दयानन्देति नाम बोधनाय प्रवृत्तस्य भवतोऽनवरतं कृतो यत्नो मुधैवान्तं जगामेति खेदान्मौनमेव भवान् भजताम् । तदेव नः श्रेयस्करं भाति भवते । अपि च—'यस्य अग्रे सरस्वती निरुक्तविशेषणविशिष्टा निवसति' सत्यम्-हृदयङ्गममुक्तवानसि, यस्याग्र एव सरस्वती निवसति न पुरतः । मामयं दण्डी दण्डमादाय निष्ठुरं प्रहरिष्यति, समूलञ्चोन्मूलयिष्यतीति साहाय्यमपश्यन्ती भीता कुरंगीव वराकी सरस्वती विस्फारितनेत्रा तूष्णीमेवान्तर्दधे दयानन्दजनैः पूर्वमेव । अग्रशब्दो हि पूर्वार्थाभिधायी





"सदेवसोम्येदमग्र आसीत्"—अग्रजन्मेत्यादि प्रचुरप्रयोगदर्शनात् । अथ भावत्कमभिप्रायं स्वीकृत्यापि सरस्वतीपदप्रयुक्तिं नोत्पश्यामः समञ्जसाम् । ब्रह्मप्रणयिनी वाग्देवतेति चेन्न कपोलकल्पितत्वाद् भवन्मये तस्याः । वाङ्मात्र वाच्या सेति चेत्-तदपि न—ततोऽपि भवदभिमत सिद्धेरभावात् । ईशशरणेत्यादिविशेषणवैयर्थ्याच्च । 'प्रतत सुगुणा', 'वेदमनना', इति विशेषणद्वयमपि निःसारमेव—तत्रातिशयविधानविरहात् । किं बहुना-बालालितमेवानया कृत्या कृतमिति ।

मनुष्येभ्यो हितायैव
सत्यार्थं सत्यमानतः ।
ईश्वरानुग्रहेणेदं
वेदभाष्यं विधीयते ॥४॥

हितशब्दप्रवृत्तिनिमित्तमजानतैवात्र भवता 'हिताये'ति निबद्धमिति प्रतीमः । अन्यथा 'हितमि'त्यनेनैवाभिप्रेत सिद्धेः । सत्यार्थमिति पदं निधाय सत्यमानतः इति न रमणीयरूपम् । निरर्थकत्वात्तस्य । तथा एव शब्दोऽपि मुधास्थितिक एवाभाति । अवधारणाद्यर्थस्य प्रयोजनाभावात् ॥

संस्कृतप्राकृताभ्यां यत् भाषाभ्यामन्वितं शुभम् ।
मन्त्रार्थवर्णनं चात्र क्रियते कामधुङ्मया ॥५॥

अहो ! वैयात्यं मस्करिमहाशयस्यास्य यद् व्याकृतितन्त्रबोधगन्धशून्यधीरपि वेदभाष्य उत्तिष्ठते । भगवति ! देववाणि !! काममधुना ते दशा दयनीया संवृत्ता, यत्तावकीनं सुसंस्कृतं रूपं विविधदोषदूषितं कर्तुं समुद्युञ्जते दोषज्ञंमन्या धर्मध्वजिमूर्धन्याः केचन । अहो नु खलु भोः ! धर्मतत्त्वं वावश्यमानाः कृतसाधुवेषापमाना यूयमद्य वञ्चिताः । अयि पक्षपातपङ्कविरहितदृशो विद्वद्विशोऽत्र भवन्तो विदांकुर्वन्तु हृद्यं पद्यमिदं यत्र प्रथममेवाशुद्धियष्टिकया प्रहृतं व्याकरणालंकाराहितसौन्दर्यपुषि गीर्वाणवाणी वपुषि । संस्कृतशब्दात् स्त्रीद्योत्ये 'अजाद्यतष्टाप्' इति सूत्रेण टापि कृते 'संस्कृता' इति, प्रकृतेरागता इत्यर्थविवक्षायां चाणिकृते 'टिड्ढे'त्यादिना ङीपि प्रत्यये पूर्वस्याचो वृद्धौ कृतायां 'प्राकृती' इति च रूपसिद्धिः । इतरेतरयोगद्वन्द्वे च कृते 'संस्कृताप्राकृतीभ्यामि'त्येव रूपं साधु भवति । परं 'संस्कृतप्राकृताभ्यामि'तिवदतो दयानन्दस्योद्भटपाण्डित्ये नास्ति विदुषां सन्देहलवोऽपि । यतो हि सर्वथाऽपरतन्त्रप्रकृतयो योगिनो भवन्ति—किमिति व्याकृति तन्त्राधीनतामपि ते स्वीकुर्युः । किञ्च—यद्विधं मन्त्रार्थवर्णनं भाष्ये तदपि सदसद्विचारवद्भिर्विद्वद्भिः समालोचनीयम् । अपि च मन्त्रार्थवर्णनं किं भाष्याद् भिन्नम् ? तत्स्वरूपं वा ? भिन्नं चेत् तत् किमात्मकमिति वक्तव्यम् ।

अभिन्नं चेत्-द्वाभ्यां शब्दाभ्यां कथनं व्यर्थमेव सर्वथापि । किञ्च वर्णनपदस्यापि व्याख्यापरत्वात् मन्त्राणां तत्र व्याख्यानं क्रियते उतार्थस्येत्यपि संशयास्पदमेवेत्यलं बहुप्रपञ्चेन । यथा यथात्र विचारः क्रियते तथा तथा महर्षेरस्य प्रागल्भी संस्तवः प्रस्फुरन् संन्यासिजनोचितान्मानादप्यपहस्तयति नः ।

> पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा ।
> अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च ॥

इत्युक्तिः कस्यचित् कवेरत्र साधु सङ्गच्छते ।

अपि च—

> आर्याणां मुन्यृषीणां या व्याख्यारीतिः सनातनी ।
> तां समाश्रित्य मन्त्रार्था विधास्यन्ते तु नान्यथा ॥६॥

इत्यत्र प्रष्टव्योऽयं भिक्षुपारीन्द्रः—किमृषय आर्या न भवन्ति ? अथ मुन्यृषि शब्दयोश्च कोऽस्ति परमार्थिको भेदः—यतस्तत् पृथगुपादानं व्यधायि वेदभाष्यखुरलीकामेन भवता । किञ्च तत्र भवत्कृतौ केनानभिज्ञेनाप्रामाणिकता शङ्किता, यत् 'न त्वन्यथे'ति सग्रीवाघूर्णनं सशपथमुच्चैर्घोषं चोद्घोषितम् । सत्यं जगतीतले नास्ति तादृशः कोऽपि पुरुषो यस्तपस्विनां भवादृशां कृतिं काक्षेणापि निभालयेत् । यतः 'स्वयं सिद्धास्तपस्विनः' । किमनल्पजल्पनेनाप्रस्तुतविस्तरेण । भगवन् ! कुतो न विहिताक्षवाटभुवि प्रतीपं प्रति रुचिर्भवता विपुलवपुषा । यतोऽनेके भवादृशास्तत्र कृतार्था भवन्ति धनादिलाभेन । अनेकजन्मार्जितपुण्यप्रभावसद्गुरुप्रसादाधीतिकारणकलापसाध्ये श्रद्धाभक्तिभूष्ये वैदुष्ये तु न कथमपि गतिर्भ्रान्तचेतसामटाट्यापरताजुषां भवादृशाम् ॥

किञ्च—

> येनाधुनिकभाष्यैर्ये टीकाभिर्वेददूषकाः ।
> दोषाः सर्वे विनश्येयुरन्यथार्थ विवर्णनाः ॥७॥
> सत्यार्थश्च प्रकाश्येत वेदानां यः सनातनः ।
> ईश्वरस्य सहायेन प्रयत्नोऽयं सुसिध्यताम् ॥८॥

इतीदमस्य चरमचेष्टितम् । 'आधुनिकभाष्यैष्टीकाभिश्च येन्यथार्थविवर्णना वेददूषका दोषाः सर्वे येन विनश्येयुः' । इति प्रथमश्लोकान्वयः । हा हन्त । वेदार्थवित्त्वाभिमानिना श्रीस्वामिना पद्यमिदं संकलय्य विदितसाहित्यादिविद्या विज्ञातपरोक्तिहृद्याः समाश्रितशिष्टपद्याः सहृदयहृदया अभिलषितवैदिकसमयाभ्युदयाः सूरयो नितरां कामं पदपदार्थ-व्यवस्थारक्षांप्रति चिन्ताकुलाः कृताः । हा गुणोपकृतालङ्कारालङ्कृता दोषगन्धराहित्यानवद्यरूपा कविता





भगवती साम्प्रतमसाम्प्रतं रूपं लम्भिता तपस्विना तपस्विनी । अस्य श्लोकस्यान्वितार्थः किंविध इति विज्ञैर्विचार्य्यम् । यदि दोषजनकतायामाधुनिकता हेतू रोचेत तस्मै तदा तत्कृतं भाष्यं किंबलात्ततो विनिर्मुक्तं भवेत् । किंतु अपेक्षाकृताधुनिकतापि तस्य सद्यस्का एव, कुतो न तत्रातिशयेन वेददूषकत्वम् । किं च टीकास्तु स्वप्रामाणिकत्वे आधुनिकतानाधुनिकतानपेक्षा एवात्र भवता दोषोत्पादिकाः स्वीकृताः । परं तत्र नादायि कश्चिद्धेतुः । किं च दोषशब्देनैव दूषकत्वे स्फुरति व्यर्थमेव'दूषकाः' इति पदम् । अपि च यच्छब्देन कमप्यर्थमभिलप्य पुनस्तदर्थप्रतिपादनाय तच्छब्दप्रयोग एव साधुर्भवति । यत्तदोर्नित्यसम्बन्धस्याभिधानिकैः स्वीकृतत्वात् । तथा च 'ये दोषाः' इति पूर्वमभिधाय तदिति सर्वनाम्ना पुनस्तदर्थमनुक्त्वा 'सर्वे' इत्येतावन्मात्रप्रयोगोऽसाधुरेव । किंच येनेति साकांक्षमेव पदं कथंकारं प्रत्ययादि । प्रकृतेन भाष्येणास्य सम्बन्ध इति चेत्—तस्य सफलतायां हेतुर्वाच्यः । आधुनिकभाष्यादिजनितदोषा नश्येयुरिति कथं नायुक्तम् । अधुनापि तद्विरहाभावप्रसिद्धेरिति ।

द्वितीयपद्येऽपि—वेदानां यः सत्यार्थः स प्रकाश्येत इत्युक्त्वा तस्य 'सनातन' इति विशेषणं निःसारमेव । सत्येनैव तदर्थसिद्धेः । 'ईश्वरस्य सहायेन प्रयत्नः सुसिध्यताम्' इत्यत्र सहायपदं न रमणीयम्—सहायतार्थबोधशक्तिविरहात्तस्य । यथाश्रुतार्थाभिधाने भवत्तात्पर्यविलोप एव स्यात् । सहायशब्दो हि अनुचरे प्रसिद्धः । 'अनुप्लवः सहायश्चानुचरोऽभिचरः समाः' इत्यमरप्रामाण्यात् । 'सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः' इत्यादि कविप्रयोगेष्वपि नैव दत्तमवधानं भिक्षुकपुङ्गवेनेति प्रतीयते । एवमास्तिकानां नो नये नेश्वरोऽनुचरो भवितुमर्हति दयानन्दस्य । नापीश्वरस्यान्यः कश्चित्तादृशोऽनुचरः साधयितुं यः शक्नुयादेतस्य प्रयत्नम् । तस्माद्यत्किञ्चिदेतत् सर्वमिति । अनुपपत्तिनिमित्तया स्वारसिकलक्षणयास्य साधुतेति चेन्न—निरूढा-प्रयोजनवत्योरेव शिष्टैः स्वीकारात् । तथा च'शक्तिनिपुणतालोकशास्त्रकाव्याद्यवेक्षणात्' इत्यादिसाहित्यबुधबोधितकाव्यनिर्माणहेतुमनधिगम्यैव सहसानेन कवनपाटवं प्रति रुचिर्निबद्धा यत्पदे पदे प्रस्खलन् विज्ञजनपरिषद्युपहस्यतेतमाम् । किं च—'प्रयत्नः सुसिध्यताम्' इत्यत्रापि बहु स्खलितं मस्करिमहाभागेन । सिध्यतेरात्मनेपदित्वं भ्रान्त्या स्वीकृत्याशुद्धं रूपमुदलेखि, लोटि प्रथमपुरुषैकवचने तस्य 'सिध्यतु' इत्येव रूपं सिध्यति । प्रयत्नसिद्ध्याशंसापि नाभिप्रेतसाधनक्षमा, तत्प्रयत्नसाफल्यमेवाशंसाविषयः साधीयान् । सहाय्यापेक्षया चानुग्रहपदप्रयोगश्चारुर्भाति । अतएव-'ईश्वरानुग्रहेणायं प्रयत्नः सफलो भवेत्' इति पाठः साधुर्भवेत् ॥

> श्लोकैरष्टभिरेवादौ दयानन्दो यदुक्तवान् ।
> तत्सर्वं खण्डितप्रायं श्रीघनश्यामशर्मभिः ॥९०॥

एवमेवावशिष्टाणि दयानन्दस्य भूमिका ।
दर्शिता दोषबहुला हसनीया मनीषिभिः ॥९१॥

पुनरप्यत्र—वेदोत्पत्तिविषयोपसंहृतौ—अस्थाने कृतो यत्नो न फलवान् भवतीति वृद्धजनोक्तिर्युक्त रूपैव । तथा च—येऽनेन महाभागेन लोकहितकामनया आर्यसमाजाः स्थापितास्तेषु सम्प्रति अनिमुपैत्युपजापो न प्रतापः, स्फारीभवति विद्वेषिभावो न सत्स्वभावः; स्फीततां प्रयाति स्वार्थपरता न परोपकारित्वनिरतता, समेधते नास्तिकवावप्रणयिता न वेदबोधितसुकृताभ्यसनिता, समुज्जृम्भते पुरोभागित्वं न परोक्तिगुणानुरागित्वम्, वर्द्धतेतरां लोकैषणासमादरो न निन्दिताचार निरादरः, किं बहुना-दिनेदिनेऽत्र शास्त्रमर्मानभिज्ञाः विगीताचारसन्दूषितज्ञाः कृतविप्रजनापमाना महाभिमानाः पुरुषाः प्रविश्य पुरातनीं वेदोक्त-वर्णाश्रममर्यादामपि निहत्य धर्मरतं भारतं यथाचारित्वपदं नेतुं प्रचेष्टन्ते तत्रायमवसरो विदुषामनवधानतायाः ।

सामाजिका यस्य कृतिं महात्मनो
लोकोत्तरां हन्त विमुग्धबुद्धयः ।
मत्वा यथार्थां कृतकृत्यताजुषः
सन्त्यत्र तस्यैष गिरां भरोऽधरः ॥

मीमांसकैर्यद्यपि वेदनित्यता संसाधिता युक्तिनिमानपूर्वकम् तथाप्ययं भिक्षुकराद् स्वकौशलं ख्याति निनीषुर्बत चेष्टते मृषा ॥ ये सत्यगृह्या विबुधा भुवस्तले ते चापि हा हन्त ! कथं मनस्विनः उदासते वैदिकधर्मविप्लवे जातेऽधुना दुःखमदः करोति नः ॥

तदेवमसारतर्कसन्दृब्धत्वात् श्रुतिविरोध्यर्थप्रतिपादकत्वात् शिष्टैरपरिगृहीतत्वात्-अत्यन्ता-नपेक्षाऽस्मिन् दयानन्दप्रलापे कार्याश्रेयोऽर्थिभिरित्यलं पल्लवितेन ॥

अस्माद् भूमिकाभासात् पौर्वकालिके श्री पं० उमापतिद्विवेदप्रणीते सनातनधर्मोद्धारग्रन्थे त्वेवमप्युक्तम् ।

एवं प्रत्यक्षसिद्धानां सलिलवातादिशुद्धीनामेव यज्ञफलत्वं न तु स्वर्गादीनामित्यभ्युपगच्छन् भूमिकाधारी प्रच्छन्नचार्वाक एव, अत्रैवार्थे पूर्वमीमांसाकाराणां भट्टपादानां सम्मतिरुद्धृता । तथाहि—

लौकायतिकमूर्खाणां नैवान्यत् कर्म विद्यते ।
यावत्किञ्चिददृष्टार्थं तद् दृष्टार्थं हि कुर्वते ॥१॥
वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ।
अल्पेनापि निमित्तेन विरोधं योजयन्ति च ॥२॥





तेभ्यश्चेत् प्रसरो नाम दत्तो मीमांसकैः क्वचित्
न च कश्चन मुञ्चेयुर्धर्ममार्गं हि ते तदा ॥३॥
प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे ॥४॥
क्वचिद् दत्तेऽवकाशे हि स्वोत्प्रेक्षालब्धधामभिः ।
जीवितुं लभते कस्तैस्तन्मार्गपतितः स्वयम् ॥५॥
तस्माल्लोकायतस्थानां धर्मनाशनशालिनाम् ।
एवं मीमांसकैः कार्यं न मनोरथपूरणम् ॥६॥

प्रत्यक्षिपन्नेवमनेकयुक्तिभिः पूर्वे दयानन्दमतं मनीषिणः ।
तथापि मिश्रः कथमेष केवलं द्वेष्टुं प्रवृत्तः करपात्रमेव ही ! ॥९२॥
अथास्य पश्यन्तु मृषोक्ति साहसं य एव'माभार'शिरस्कलेखने ।
त्रपां विसृज्यावदद्‌द्भुतं महत्-नवा इमाः श्रीकरपात्रमान्यताः ॥९३॥

**तथाहि हिन्दीभाषायाम्**—उनमें से कतिपय नई मान्यताओं को देखिये :—

( १ ) वेदों का कोई कर्ता नहीं है । वेदों का ज्ञान प्रलय के पश्चात् सुप्तप्रति-बुद्ध न्याय से ही हो जाता है ।

( २ ) मंत्र और ब्राह्मण दोनों ही वेदपदाभिधेय हैं ।

( ३ ) ये वेद ११३१ शाखाओं से युक्त हैं ।

( ४ ) विकासवाद के सिद्धान्त के समान वेदज्ञान भी आदि में बिना सिखाए भी हो सकता है ।

( ५ ) ईश्वर, भक्तों पर अनुग्रह के लिए साकार रूप धारण करता है ।

इत्यादि-इत्यादि ।

एताः प्राचीनतमाः-विदिताः सर्वत्र मान्यताः सर्वाः ।
कथयेद्यस्तु नवीनाः—स ऊर्णुते सूर्यमङ्गुल्या ॥९४॥
वेदार्थपारिजाते—युक्तिभिरुक्ताः प्रमाणिताः किन्तु-
मिश्र'श्रिपादजे'ति स्वहठं परिरभ्य न त्रपते ॥९५॥
प्राचीनाचार्यमर्यादारक्षाव्रतपरायणे ।
नवीनकल्पनाक्षेपः करपात्रे न युज्यते ॥९६॥
नवीनाः कल्पनाः सर्वा दयानन्दमते स्थिताः ।
वृथैव करपात्रेषु तदारोपः प्रलप्यते ॥९७॥

लोकवेदविरोधोऽपि स्पष्टं यास्ववलोक्यते ।
संक्षेपेणैव ताः काश्चित् विवशो विवृणोम्यहम् ॥९८॥

प्रसूता पाययेत् स्तन्यं षड्दिनावधि केवलम् ।
पश्चाद् धात्री धनाढ्यस्य शिशुं सम्पाययेत् पयः ॥९९॥

दुग्धं देयं गवाजादेर्दरिद्रस्य शिशोः कृते ।
कस्माद्वेदादयं न्यायो दयानन्देन शिक्षितः ॥१००॥

वेदास्तु जननीस्तन्यमेव पातुं प्रचक्षते ।
परन्त्वत्र दयानन्दा-भिप्रायः कोऽपि नूतनः ॥१०१॥

तारुण्यं तूर्णमानेतुं तरुणीनां त्वरन्नसौ ।
दिनानि षडतिक्रम्योपादिशत् स्तनबन्धनम् ॥१०२॥

प्रायः प्रसूतास्तनयोर्न दुग्धं षड्दिनावधि ।
निर्दिशन्ति प्रसूतायै वैद्यास्तावत् सदोषधम् ॥१०३॥

क्रूरदृष्टिर्दयानन्दो धात्रीशिशुषु हा ! कथम् ।
किं कुर्युः कुत्र गच्छेयुस्ते मातृस्तन्यवर्जिताः ॥१०४॥

यदि धात्र्यन्तरे धात्री निर्भरा स्यात्तदा स्फुटम् ।
धात्री क्रमो न सुलभः-सुलभैवानवस्थितिः ॥१०५॥

मिश्रबन्धो ! भवानेव व्यवस्थां कर्तुमर्हति ।
दयानन्दानुगो नूनं धात्रीस्तन्येन पालितः ॥१०६॥

वैदिकंमन्यमूर्धन्यदयानन्दमुखोद्गताः ।
जघन्याः पुनरप्यन्याः कल्पनाः शृणुताधुना ॥१०७॥

निरदिक्षद् दयानन्दो-ब्रह्मचार्यपि नैष्ठिकः ।
योनिसङ्कोचनोपायं—न जाने शिक्षितं कुतः ॥१०८॥

'न वेदेषु पुरावृत्त'मित्युद्घोष्य महेशितुः ।
सर्वज्ञतापि प्रहृता दयानन्देन निर्दयम् ॥१०९॥

करामलकवद्भूतं भविष्यद् वर्तते च यत् ।
प्रत्यक्षं यस्य तत्सर्वं स सर्वज्ञोऽभिधीयते ॥११०॥

तदुपज्ञेषु वेदेषु कथमाधुनिकत्वतः ।
दयानन्देन मन्देनावसिता स्यादनित्यता ॥१११॥

व्याप्यत्वासिद्धता हेतावत्र स्पष्टमुदीक्ष्यते ।
दैवज्ञेषु सिद्धेषु च भविष्यद्वृत्तदर्शनात् ॥११२॥





न वेदो ब्राह्मणो भागो-मन्त्रभागोऽपि पुष्कलः ।
न वेद, इति वेदानां शरीरं शकलीकृतम् ॥११३॥

यदि ब्राह्मणभागस्य वेदत्वमवमन्यते ।
तर्हि यज्ञोपवीतादिधारणं स्यादवैदिकम् ॥११४॥

मन्त्रभागे न कुत्रापि संस्काराः षोडशोदिताः ।
वसुवेदमिताश्चापि तत्र सन्ति न कुत्रचित् ॥११५॥

शिखाधारणमार्याणां मन्त्रभागे न लभ्यते ।
दयानन्दमते तस्मात् शिखापि स्यादवैदिकी ॥११६॥

अष्टाध्यायीमहाभाष्यकर्ता श्रीमान् पतञ्जलिः ।
समाम्नायतया स्तौति शिवसूत्राक्षराण्यपि ॥११७॥

वेदाङ्गेष्वपि वेदत्वं ततस्तेनोररीकृतम् ।
नह्यङ्गानि पृथक्कृत्य सिद्ध्यत्यङ्गी कथञ्चन ॥११८॥

मन्त्रव्याख्यानता चापि ब्राह्मणेषु न दृश्यते ।
पदच्छेद-पदार्थोक्ति-विग्रहादेरदर्शनात् ॥११९॥

ब्राह्मणोऽङ्गी तदङ्गं च मन्त्रा इत्यवलोकनात् ।
विधायकेषु तेषु स्याद् स्वातन्त्र्येणैव वेदता ॥१२०॥

वेदाङ्गेष्वपि वेदत्वं मन्यते चेत् पतञ्जलिः ।
स्वतन्त्रविधिवाक्येषु ब्राह्मणेष्वेषु किम्पुनः ॥१२१॥

नाद्यावधि ब्राह्मणभागवेदता
संख्यावता केनचिदप्युपप्लुता ।
ततो दयानन्दमुपेक्ष्य धीमता
श्रद्धीयतां श्रीकरपात्रवर्णिता ॥१२२॥

एकत्रिंशद्भिरधिका-वेदव्यासेन विष्णुना ।
एकादशशती प्रोक्ता शाखानां श्रुतिसम्मता ॥१२३॥

पातञ्जलमहाभाष्यव्याख्याकृद्भिरनेकशः ।
प्रसङ्गाद् योगभाष्यस्य व्याख्यास्वपि दृढीकृता ॥१२४॥

संख्येयं वेदशाखानां यत्रतत्रोपलभ्यते ।
कल्पिता करपात्रेणेत्याश्चर्यं मिश्रशेमुषी ॥१२५॥

व्यासः पराशरसुतः प्रथितस्त्रिलोक्याम्
वेदान् व्यभाजयदिमान् भगवान् स विष्णुः ।

स्त्रीशूद्रवर्गहितकामनया पुराणा-
न्यष्टादशारचयदेष दयासमुद्रः ॥१२६॥
दयानन्दमते सोऽपि भगवान् विश्वभावनः ।
पोपस्तदुपदेशाश्च पोपलीलापदाभिधाः ॥१२७॥
पुण्यं पापौघशमनं निर्जलैकादशीव्रतम् ।
दयानन्देन तच्चापि हन्त ! हास्यास्पदीकृतम् ॥१२८॥
धर्मनिर्णयतात्पर्य्यप्रचुराः सद्भिरादृताः ।
धर्मसिन्ध्वादयो ग्रन्था नामग्राहं निराकृताः ॥१२९॥
आर्यावर्ते प्रसिद्धानामार्यजातिविभूषणम् ।
जगन्नाथपुरीत्यादिधाम्नां धूतं चतुष्टयम् ॥१३०॥
दयानन्देन किं नाम न कृतं पापमुल्बणम् ।
गङ्गादितीर्थश्रद्धाभ्यो जनता विप्रलम्भिता ॥१३१॥
गङ्गायमुनयोः सन्धावाप्लुता मोक्षभागिनः ।
सन्तीति मन्त्रभागेऽपि तीर्थमाहात्म्यमुद्धृतम् ॥१३२॥
श्राद्धं पितॄणां न दिवंगतानाम्
न तीर्थयात्रा न च मूर्तिपूजा ।
न चावतारः परमेश्वरस्य
मान्यो दयानन्दमते कथञ्चित् ॥१३३॥
नास्तिकानां परित्यज्य ग्रन्थान् शिक्षेयमीदृशी ।
ग्रन्थेष्वास्तिकमान्येषु कुत्रचिन्नोपलभ्यते ॥१३४॥
दर्शेष्टौ पितृमेधस्य मन्त्रभागे सुविस्तृतम् ।
वर्णनं विद्यते, मिश्रः किंतु किञ्चिन्न वीक्षते ॥१३५॥
दर्श्येत यदि सत्यार्थप्रकाशे श्राद्धतर्पणम् ।
पश्यामः किन्तु तन्मिश्रः स्वीकरिष्यति वा न वा ॥१३६॥

**'ब्राह्मणसमाचार'** पत्रिका २९-१०-१९२० ई० मृतक श्राद्ध को पहले स्वामी जी मानते थे, **'सत्यार्थप्रकाश'** जो कि श्री राजा जयकृष्णदास बहादुर ने सन् १८७५ ई० में बनारस के स्टार प्रेस में छपवाया था, ( जो कि उसी सन् का मुद्रित हमारे पास है । ) उसमें देखिये स्वामी जी क्या लिखते हैं :—

अथ देवतर्पणम्—ओम् ब्रह्मादयो देवसुतास्तृप्यन्ताम् १ ओम् ब्रह्मादिदेवपत्न्यस्तृप्यन्ताम् ॥१॥ ओं ब्रह्मादिदेवसुतास्तृप्यन्ताम् १ ओं ब्रह्मादिदेवगणास्तृप्यन्ताम् १ इति





देवतर्पणम् । अथर्षितर्पणम् । ओं मरीच्यादय ऋषयस्तृप्यन्ताम् २ ओं मरीच्याद्यृषिपत्न्यस्तृप्यन्ताम् २ ओं मरीच्याद्यृषिसुतास्तृप्यन्ताम् २ ओं मरीच्याद्यृषिगणास्तृप्यन्ताम् २ इत्यृषितर्पणम् । अथ पितृतर्पणम् । ओं सोमसदः पितरस्तृप्यन्ताम् ३ ओं अग्निष्वात्ताः पितरस्तृप्यन्ताम् ३ ओं बर्हिषदः पितरस्तृप्यन्ताम् ३ ओं सोमपाः पितरस्तृप्यन्ताम् ३ ओं हविर्भुजः पितरस्तृप्यन्ताम् ३ ओं आज्यपाः पितरस्तृप्यन्ताम् ३ ओं सुकालिनः पितरस्तृप्यन्ताम् ३ ओं यमादिभ्यो नमः यमादींस्तर्पयामि ३ ओं पित्रे स्वधा नमः पितरं तर्पयामि ३ ओं पितामहाय स्वधा नमः पितामहं तर्पयामि ३ ओं प्रपितामहाय स्वधा नमः प्रपिताहं तर्पयामि ३ ओं मात्रे स्वधा नमः मातरं तर्पयामि ३ ओं पितामह्यै स्वधा नमः पितामहीं तर्पयामि ३ ओं प्रपितामह्यै स्वधा नमः ओं प्रपितामहीं तर्पयामि ३ ओं अस्मत्पत्न्यै स्वधा नमः अस्मत् पत्नीं तर्पयामि ३ ओं सम्बन्धिभ्यो मृतेभ्यः स्वधा नमः सम्बन्धीन् मृतांस्तर्पयामि ३ ओं सगोत्रेभ्यो मृतेभ्यः स्वधा नमः सगोत्रान् मृतांस्तर्पयामि ३ इति तर्पणविधिः ।

पित्रादिकों में जो कोई जीता होय उसका तर्पण न करे और जितने मर गये हों उनका तो अवश्य करे । तर्पण और श्राद्ध में क्या फल होगा ? इसका यह समाधान है कि तर्पण का अर्थ है तृप्ति और जो श्रद्धा से किया जाय उसको श्राद्ध कहते हैं । मरे भए पित्रादिकों के तर्पण और श्राद्ध का यह फल है कि जीते भए को अन्न और जल से सेवा अवश्य करनी चाहिये । दूसरा गुण यह है कि जिनके ऊपर प्रीति है उनके नाम लेकर जब श्राद्ध-तर्पण करेगा तब उसके चित्त में ज्ञान सम्भव है कि जैसे—वे मर गये वैसे मुझको भी मरना है, मरण के स्मरण से अधर्म करने में भय होगा धर्म करने में प्रीति होगी । तीसरा गुण यह है कि दाय भाग बांटने में सन्देह न होगा, क्योंकि इसका यह पिता है, यह पितामह है, ऐसे ही छह पीढ़ी तक सबों का नाम कण्ठस्थ रहेगा, वैसे ही इसका यहपुत्र है, यह पौत्र है, यह प्रपौत्र है इससे दायभाग में कभी भ्रम न होगा । चौथा गुण यह है कि विद्वानों को श्रेष्ठ धर्मात्माओं ही को निमन्त्रण भोजन देना चाहिये, मूर्खों को कभी नहीं, इससे क्या आता है कि विद्वान् लोग आजीविका के बिना कभी दुःखी न होंगे, निश्चिन्त होकर सब शास्त्रों को पढ़ावेंगे, और विचारेंगे, सत्य उपदेश करेंगे और मूर्खों का अपमान होने से मूर्खों को भी विद्याके पढ़ने में और गुण ग्रहण में प्रीति होगी । सत्यार्थप्रकाश पृ० ४२ से ४८ तक ।

द्वादश्यामपि चावृत्तौ सत्यार्थेऽस्मिन् प्रकाशिते ।
पृष्ठे शततमेऽलेखि-देवर्षिपितृतर्पणम् ॥१३७॥
कथ्यतां कीदृशं मिश्र! स्वास्थ्यमस्ति तवाधुना ।
दयानन्दगुरोराज्ञापालने भव सत्वरः ॥१३८॥

पितॄणां श्रद्धया श्राद्धं कुरु पालय पुत्रताम् ।
पूर्वापरविरुद्धं वा भाषमाणं गुरुं त्यज ॥१३९॥
दयानन्देन सत्यार्थ-प्रकाशे लिखितं हि यत् ।
पूर्वापरविरुद्धं तत् दर्शयामि समासतः ॥१४०॥

( सत्यार्थप्रकाश मुद्रित सन् १८८४ ई० )

पृष्ठ ३—ओ३म् सच्चिदानन्देश्वराय नमो नमः । पृ० २६—आधुनिक ग्रन्थों में —श्रीगणेशाय नमः, शिवाय नमः, नारायणाय नमः, इत्यादि मंगलाचरण का खण्डन । पृ० ४४—कुलीन शुभ लक्षण युक्त शूद्र हो तो उसको मन्त्रसंहिता छोड़के सब शास्त्र पढ़ावे । पृ० ७४—शूद्र और अतिशूद्रादि के लिये वेद पढ़ने की आज्ञा है । पृ० ९१—तीनों वर्णों की सेवा करना—यही एक शूद्र का कर्म गुण है । पृ० ४५—२४वर्ष ब्रह्मचर्य करने से ७० वा ८० वर्ष की आयु और जो ४८ वर्षपर्यन्त यथावत् ब्रह्मचर्य करता है, उसकी आयु ४०० वर्ष की होती है । संवत् १९३३ की छपी संस्कारविधि पृ० १०१—जो ४८ वर्षों तक ब्रह्मचर्यानुष्ठान करता है सौ वर्ष से उसकी उम्र न्यून नहीं होती । स्वामी दयानन्दजी की आयु केवल ५९ वर्ष हुई । सत्यार्थ० पृ० ४६—विवाह की अवस्था ४० वर्ष उत्तमोत्तम ४८ वर्ष । पृ० ११८—ग्यारहवीं स्त्री तक नियोग । पृ० ५४-५७—बिना माता-पिता के योग से सन्तानोत्पत्ति होना सृष्टिक्रम के विरुद्ध—असत्य और असंभव है । पृ०२३—सृष्टि की आदि में सैकड़ों-सहस्रों मनुष्य युवावस्था से युक्त माता-पिता के बिना उत्पन्न हुए । पृ० ७१—ऋषि-प्रणीत ग्रन्थों को इस लिये पढ़ना चाहिये कि वे बड़े विद्वान् सब शास्त्रवित् और धर्मात्मा थे । इनमें भी जो-जो वेदविरुद्ध हो उस-उस को छोड़ देना ।

पृ० ९७—उत्तम स्त्री सब देश तथा सब मनुष्यों से ग्रहण करे । पृ० ११५ द्विजों में स्त्री और पुरुष का एक ही बार विवाह होना वेदादि शास्त्रों में लिखा है, द्वितीय बार नहीं । पृ० ११७—अक्षतयोनि विधवा के साथ पति का छोटा भाई भी विवाह कर सकता है । हे स्त्री तेरे पहले विवाहित पति का नाम सोम है, दूसरे नियोग करने वाले का नाम गन्धर्व है, तीसरे का अग्नि और जो तेरे चौथे से ११ वें तक नियोग से पति होते हैं वे मनुष्य कहाते हैं । पृ० ११८—सन्तान का सर्वथा क्षय हो तब नियोग होवे । पृ० ११३—एक विधवा स्त्री दो अपने लिये और दो-दो अन्य चार पुरुषों के लिये सन्तान कर सकती है । विधवा स्त्री के लड़के वीर्यदाता के न पुत्र कहलाते न उसका गोत्र होता न उसका स्वत्व उन लड़कों पर रहता किन्तु वे मृत पति के पुत्र बजते । पृ० ११८—( अन्यमिच्छस्व सुभगे पतिमत् ) जब पति सन्तानोत्पत्ति में असमर्थ होवे तब अपनी स्त्री





को आज्ञा दे कि तू दूसरे पति की इच्छा कर अब मुझसे सन्तानोत्पत्ति की आशा न कर । पृ० ११९—जो पुरुष अत्यन्त दुःखदायक हो तो स्त्री को उचित है कि उसको छोड़ कर दूसरे पुरुष से नियोग कर सन्तानोत्पत्ति कर ले । पृ० १२०—गर्भवती स्त्री से एक वर्ष समागम न करने के समय में पुरुष वा स्त्री से न रहा जाय तो किसी से नियोग करके उसके लिये पुत्रोत्पन्न कर दे । पृ० १५२—उसका पुण्य फल सब नष्ट हो जाता है । पृ० ३२४—पाप वा पुण्य किसी का नहीं छूटता । पृ० १३२—मुक्ति रूप अक्षय आनन्द, पृ० २५०—मुक्त जीव अनन्त व्यापक ब्रह्म में स्वच्छन्द घूमता है, पृ० २३६—जो ब्रह्म सर्वत्र परिपूर्ण है, उसी में मुक्त जीव आनन्द पूर्वक स्वतन्त्र विचरता है । पृ० २४०—मुक्ति के स्थान में बहुत भीड़ भड़क्का हो जायगा, इस लिये महाकल्प के पश्चात् मुक्त भी फिर संसार में आते हैं ।

पृ० २२३—प्रश्न—ईश्वर ने किन्हीं जीवों को मनुष्य, किन्हीं को सिंहादि, किन्हीं को हिरण, गाय आदि किन्हीं को वृक्षादि कृमि-कीट-पतंगादि जन्म दिये हैं, इससे परमात्मा में पक्षपात आता है ।

उत्तर—पक्षपात नहीं आता, क्योंकि उन जीवों के पूर्वसृष्टि में किये हुए कर्मानुसार व्यवस्था करने से—जो कर्म के बिना जन्म देता तो पक्षपात आता । मुक्त जीवों के शुभाशुभ कर्मों का नाश हो जाता है, उनका जन्म मानने में वही दोष पूर्ण है । लीजिये बाबा जी की अपनी ही युक्ति से पुनरावृत्ति का सिद्धान्त चूर्ण-चूर्ण है । पृ० २४१—मुक्ति कारागार और फांसी के समान है । पृ० २२८—पृथिव्यादि लोक घूमते हैं । दूसरी बार की छपी संस्कार विधि पृ० १२९—ध्रुवा द्यौः—'ध्रुवा पृथिवी' अथर्ववेद के इस मन्त्र के अर्थ में भी पृथिवी को स्थिर ही लिखा है । यजुर्वेद अध्याय ७ मंत्र २५—'उपयाम गृहीतोऽसि ध्रुवोऽसि ध्रुवक्षिति' इस मंत्र के अर्थ में भी पृथिवी को स्थिर ही लिखा है । पृ० २२८—आयं गौः पृश्निरक्रमीत्' इस मन्त्र से पृथिवी का घूमना सिद्ध किया है ।

यत्र तत्र बहुत्रैवमाद्याः सन्ति सहस्रशः ।
दयानन्दोक्तयः पूर्वापरचिन्ताविवर्जिताः ॥१४१॥
आसुरं भावमापन्नो दुर्मेधा वैदिकब्रुवः ।
देवतानां पितॄणां च खण्डने कुमतिं व्यधात् ॥१४२॥

बभ्राम भूतलेऽज्ञानां चेतांस्यामोहयन् गिरा ।
मनोऽभीष्टान् विधायार्थान् भाष्यव्याजेन दुर्मतिः ॥१४३॥
वेदव्याख्यानरूपत्वं ब्राह्मणस्य अमादयम् ।
तैत्तिरीयश्रुतेर्वाक्यात्-काव्यटीकामिवाध्यगात् ॥१४४॥

तद्रूपत्वे च तत्त्वेऽसौ न मनाग् भेदबुद्धिकृत् ।
उदात्तैरनुदात्तैश्च स्वरैर्व्याख्यापि यन्मते ॥१४५॥
सस्वरस्याप्यमन्त्रत्वं ब्राह्मणस्यावगच्छति ।
अतस्तस्य स वेदत्वे स्वैरं विप्रतिपद्यते ॥१४६॥

आत्मानं वैदिकं लोके ब्रुवाणो वेददूषकः ।
वेदानां पृष्ठतो गच्छन् कुक्षौ प्रावेशयत् क्षुरीम् ॥१४७॥
शुद्धवंशे समुत्पन्नो वेदाभ्यासरतः पुमान् ।
कर्तुमेतादृशं निन्द्यं मनसापि न वाञ्छति ॥१४८॥

अपारम्परिकः पन्था विद्वत्संवादवर्जितः ।
अशास्त्रीयोऽज्ञजनता व्यामोहायैव तत्कृतः ॥१४९॥
मायया मोहितः शम्भोर्दयानन्दो बभूव सः ।
प्रमादबोधरात्रिं यो बोधरात्रिममन्यत ॥१५०॥

कदर्थितः सजातीयैर्जनैः केनापि हेतुना ।
प्रत्यज्ञासीत् ततो द्रोग्धुं तेभ्य इत्यपि विश्रुतम् ॥१५१॥
अस्तु वा यादृशी शम्भोः प्रेरणा भवतात्तथा ।
कलिकालोचिताचार्यः कल्पते कलिवृद्धये ॥१५२॥
उक्तं हि-कविकुलशिरोमणिना श्रीहर्षेण—
अवश्यभव्येष्वनवग्रहग्रहा-यया दिशा धावति वेधसः स्पृहा ।
तृणेव वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥
वेदार्थपारिजातस्य पर्यालोचनशीर्षके ।
श्रीसुरेन्द्रकुमारस्य वैदग्ध्यमधुनेक्ष्यताम् ॥१५३॥

तरणि तनूजातीरे-श्रीमत्करपात्रयोजितो यज्ञः ।
यत्स्मृतिपथमायातः प्रशंसनीयस्तदर्थमसौ ॥१५४॥
अथ च श्रीयमुनायास्तरणितनूजेति नाम निर्दिष्टम् ।
स्वीकृतपुराणगाथस्ततोऽप्यसौ धन्यवादार्हः ॥१५५॥
कथमस्तु नाम तनुजा दायानन्दे मते जडः सूर्यः ।
निष्पक्षपातहृदयः समुपेक्षितवान् दयानन्दम् ॥१५६॥
पौराणिकावुभावपि-मिश्रसुरेन्द्रौ मतेऽस्मदीये तु ।
सूर्यं चेतनमेकः—स्वीकुरुते नाकमप्येकः ॥१५७॥





किन्तूभयतो भ्रष्टौ-तरिद्वयेऽपि प्रसारिताङ्घ्री द्वौ ।
पश्यन्तावपि चान्धौ कस्माच्चित् कारणादेतौ ॥१५८॥
एकाङ्काङ्कितचिह्ने-वृथाकृते नैव किञ्चिदप्युक्तम् ।
कृत्वा नवाक्षराणि-द्वितीयपद्यप्रथमपादे ॥१५९॥
द्व्यङ्काङ्कितेऽप्यसन्धिर्दूषणमस्त्येव दुःसमाधानम् ।
नह्यनुकार्योऽसन्धिर्व्यासैर्नर्षिभिरिति हि सन्धिः ॥१६०॥

तत्रैवादावन्ते-स्त्रीलिङ्गे व्याहृतिः प्रयुक्तैव ।
कथमिव मुद्रणदोषो निबन्धकर्तुः स सम्भाव्यः ॥१६१॥
नामरकोशे भवता-दृष्टः किन्नाम पञ्चमः श्लोकः ।
ङीपा युक्तं तत्र-त्वं तु ब्रूषे 'त्रिलिङ्ग'मिति ॥१६२॥
स्पष्टं 'छन्दो' पदमिति विज्ञेया भूमिकाकृतोऽनुकृतिः ।
त्वं त्वत्रैवश्चुत्वं विस्मृत्य प्रायुनङ् नु गुणम् ॥१६३॥
वेदार्थपारिजाते-प्रत्युक्ता ज्ञानमध्यता युक्त्या ।
तत्र तु किमप्यनुक्त्वा वृथैव निःसारता प्रोक्ता ॥१६४॥
'प्रासादा' विति पादे-वर्णाः सप्तैव सन्ति हे विद्वन् !
नहि पञ्चमे तृतीये श्लोके छन्दः सृतिर्ज्ञाता ॥१६५॥
'साक्ष्यत्वा'दित्यत्र-यत् त्वप्रत्ययविधेरनौचित्यम् ।
प्रादर्श्युपेक्ष्य तत्किं प्रदर्श्यते मुद्रणाशुद्धिः ॥१६६॥

हा हन्त ! शास्त्रिवर्य्य ! शास्त्रविचारे पदे पदे स्खलता ।
लज्जां त्यजता किमिदं कुशकाशालम्बनं क्रियते ॥१६७॥
प्राप्तेः परम्परायाः-विद्याया मुण्डकोपनिषदुक्तिः ।
उपनिषदेव हि वक्त्री-द्वयोरिहास्ते वचि क्रिययोः ॥१६८॥
'अङ्गिरस' इति च षष्ठी न च तस्याः कर्मताविवक्षा स्यात् ।
नहि सा कारककोटौ-बोद्धया सम्बन्ध सामान्ये ॥१६९॥

पठतेः कर्ता मनुजो-भवतौ च ज्ञानकर्तृकत्वमिति ।
प्रश्नः क्त्वा प्रत्ययगः स तु न समाहितः कथञ्चिदपि ॥१७०॥
'उभे अपी'ति हि वाच्यम्-प्रगृह्यसंज्ञाबलात् प्रकृतिभावे ।
शौनकः स इति हि स्यात्-करपात्र परीक्षक श्रीमन् ! ॥१७१॥
'क्त्वा' इत्यस्य स्थाने-त्वेति लिखन् प्रत्ययस्वरूपं हा !
वैयाकरणखसूचे !-किमशुद्धिविधायिका भवति ॥१७२॥

'प्रादुश्चक्रे भाष्य-नाम्ने'त्यत्रास्ति पञ्चमं दीर्घम्-
'प्रतिपद्यादित्ये'ति किं नालेखीद् दयानन्दः ॥१७३॥
स्वल्पीयस्यपि लेखे नाल्पिष्ठाः सन्ति दर्शितास्त्रुटयः-
किञ्च तवास्मिन्नित्थं-सन्तोष्टव्यं त्वया दृष्ट्वा ॥१७४॥
यद्यपि दायानन्दे-पद्ये कश्चिददर्शयदिमं दोषम् ।
तथापि नायं दोषः-प्रस्तारविधेः प्रतापेन ॥१७५॥
वृत्तेऽनुष्टुभि नाना-भेदाश्छन्दोविधि प्रकाशेषु ।
ग्रन्थेषु वर्णितास्ते-तैरुत्सर्गा अपोद्यन्ते ॥१७६॥
पञ्चमलघुतानियमाः-षष्ठगुरुत्वस्य चापि वा नियमाः ।
तैस्तैरपवादवलैरुत्सृज्यन्ते यथायोग्यम् ॥१७७॥

तदुदाहृतिप्रपञ्चो-विस्तृतिभीत्येह नैव वर्णयितुम् ।
सुशक इति प्रेक्षावन् ! धार्या नैवाक्षमा कृपया ॥१७८॥
यच्चाप्युक्तं 'पित्रि'ति-दैर्घ्यापत्तिस्तृतीयवर्णस्य ।
तत्रेदं शृणु सम्यक्-युञ्जन् मनसा श्रवणयुग्मम् ॥१७९॥

वार्तिकमेकं 'ऋ' विधे स्तत्र विधेयं नृसिंहसमकक्षम् ।
वर्णद्वयं द्विमात्रं बोद्धव्यं रेफारव्यमज्भक्ति ॥१८०॥
तस्मादृकारपरकः संयोगो रेफयुग्मसङ्घटितः ।
पूर्वं वर्णं दीर्घं-कर्तुं योग्यो न सन्देहः ॥१८१॥

संयुक्ताद्यं दीर्घं-न भवत्यपि कुत्रचिद्विशेषविधेः ।
ऋकारपूर्वं दीर्घं-कुत्रापि तथा भवत्येव ॥१८२॥
सम्प्रति काव्यपरीक्षा-करपात्रजिगीषुणा सुरेन्द्रेण ।
हंसमिव वायसेन-प्रोक्ता प्रत्युच्यतेऽक्षरशः ॥१८३॥

अभवन्मतसम्बन्धं-दोषं श्रुत्वा कुतश्चनायुष्मन् ।
तल्लक्षणं क्व घटते-विविक्तमेतन्न किञ्चिदपि ॥१८४॥
मर्यादया कवीनामिष्टो योगो न यत्र सम्भवति ।
तत्रैवायं दोषो-हेतुश्चेत्स्यादनिष्टस्य ॥१८५॥

रसमुद्दिश्य न कश्चन-वाक्यमिदं केवलं कथोद्घाटि ।
वर्तत इति जानीहि-नात्रैवं दोषगन्धोऽपि ॥१८६॥
मुख्यार्थहतिर्दोषः-काव्ये मुख्यार्थता रसस्योक्ता ।
व्यक्ता सा च विभावै-रनुभावैः सञ्चरणशीलैः ॥१८७॥





अत एव विश्वनाथो-ब्रूते वाक्यं रसात्मकं काव्यम् ।
नहि काव्यता कदाचित् छन्दोबद्धत्वमात्रेण ॥१८८॥
ग्रामं गच्छति रामो-भोज्यं भुंक्ते सरसं पुनः स्वपिति ।
बोधोपयिकं वाक्यं सदपीदं नैव काव्यं स्यात् ॥१८९॥
ग्रथितस्यास्यास्माभि-र्हिन्द्यनुवादोऽपि लोकहितहेतुः ।
स्यादिति केवलवार्ता-न कथंचन काव्यपदभाक् स्यात् ॥१९०॥
अत्रासत्यपि काव्ये-कुरुते यः काव्यदोषपरिगणनम् ।
मलमन्विष्यति करटः-कासारे निर्मले क्वापि ॥१९१॥
नातो नेयार्थत्व-न्यूनपदत्वादिचिन्तनं योग्यम् ।
नैवास्य लक्ष्यलक्षण-समन्वये नः पिपाठयिषा ॥१९२॥
ऽयायुषमित्यस्यार्थो-यथा पृथक्कृत्य दर्शितो द्वाभ्याम् ।
वेदार्थपारिजाते-विशदीकृत एव सुस्पष्टम् ॥१९३॥
भाषापक्षोऽप्युभयोर्भेदेन विशिष्य दर्शितप्रायः ।
न पिष्टपेषणमुचितं-वर्तन्तां स्वेच्छया सर्वे ॥१९४॥
भगवान् वेदव्यासः शास्त्रार्थमुपसंहरन् हितं ब्रूते ।
सेव्यो वैदिकधर्मः-प्ररुदन् हस्तौ समुत्थाप्य ॥१९५॥
वैश्वानरस्तु पुरुषो धर्ममधर्मं स्वतः ससंकल्पम् ।
हृदयाद्धर्ममजनयत्-समवर्ती पृष्ठतोऽधर्मम् ॥१९६॥
धर्मस्त्रियुगीं व्याप्य-क्रमशो न्यूनैः स्थितो निजैः पादैः ।
चरमेऽधर्मस्तु युगे-तिष्ठति पादैश्चतुः संख्यैः ॥१९७॥
भगवत्प्रेरणयैवं-मर्यादा स्थापिता जगच्चक्रे ।
पालनमप्येतस्यास्तदधीनं नास्ति भयहेतुः ॥१९८॥

●

शब्दोहि योगशास्त्र सम्मत् । ध्येयस्याकारेणैव साक्षिणि निर्भासमानं स्वरूपशून्यताऽऽपन्नमेव ध्यानं समाधिशब्दवाच्यम्, "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इतियोगदर्शनसूत्रात् "धारणा पञ्चनाडीकाध्यानं स्यात् षष्ठिनाडिकं— दिनद्वादशकेनैव समाधिरिह भण्यते" इति स्कांदाच्च एवं "ध्यानद्वादशपर्यन्तं मनोब्रह्मणि योजयेत्-तिष्ठेत्तल्लयतो युक्तः समाधिः सोऽभिधीयते" इति गारुडाच्च समाधिपदेन भवत् पद्यसापेक्ष शंकासमाधानात्मकाऽर्थाऽभिधानेऽवाचकतया, अप्रतीतदोषदुष्टत्वम्, शब्दानुशासनाऽतिरिक्तयत्किंचिद्योगशास्त्रमात्र प्रसिद्धत्वात् ।

अथ च विरुद्धमतिकृदपि, शंकानां निराकरणरूप प्रकृतार्थप्रतिबन्धकीभूताङ्गीकारात्मकाऽप्रकृतार्थधीजनकत्वात् । तथा च समाधि शब्दो हि अङ्गीकारार्थबोधजनकः नतु समाधानस्य "सम्बिदागूः प्रतिज्ञानं नियमाऽश्रव संश्रवाः- अङ्गीकाराऽभ्युपगमप्रतिश्रव-समाधयः" इति कोपात् । दशपर्य्यायनामानि अङ्गीकारस्य । इत्थं—प्रतिवादिनां कृतानां शङ्कानां समाधिः-अङ्गीकार (स्वीकृतिर्वा) इत्येकार्थोऽभिहितो भवति, न तु "आपकी भाष्य भूमिका पर उठाई शंकाओं का निराकरण (समाधान) कर रहा हूँ । १० पृ० भाषा की दूसरी पंक्ति, इत्यात्मको निर्मलार्थः ईदृक् स्खलनं—"तेन ध्यात-समस्तशास्त्र-मतिना, तत् खण्डनं खण्ड्यते" इत्येवं प्रतिजानतः ग्रन्थकारस्य शास्त्रस्वाध्यायं हिनोति । अतः उक्तपद्ये यथार्थार्थबोधनाय समाधिपदस्थाने समाधानपदं एव प्रभु । इत्थं समाधिपदस्य यमनियमासनाद्यष्टविधयोगाङ्गेषु चरमेऽङ्गे एकतानात्मकरूपे समाधौ रूढित्वात् शंकानां निराकरणात्मकाऽर्थाऽलाभः, प्रत्युत शङ्कासु समाधिः (अङ्गीकारः) इति विपरीतो वज्रपातः । रूढिर्योगाद् बलीयसी इति सिद्धान्तात् ।

**वेदार्थपारिजातपर्य्यालोचने वे० क० द्रु० ४६ पृ०** अस्मिन्नभागे कल्पद्रुम रचयितुः पुजारिणा, सुरेन्द्रशास्त्रिणा करपात्र-महाभागानां व्याकरणाद्यशुद्धयः कल्पितः, परीक्षा समीक्षा-निरीक्षाश्च कृताः । तत्रैव "स्वयं कुर्वन्नशुद्धि इति श्लोकरचनासाहसेन उपहसितम्, परमिदं ईर्ष्याप्रतिफलितमेव तक्रमथनं नतु दुग्धस्यदध्नोः ।

वे० क० द्रु० पृ० ४६ त्रिलिङ्गं यो न जानाति इत्यक्षिपन् "त्रयोव्याहृतयः" इत्युद्धृतम् ।





समाधानम्—'या विशेष्ये सुदृश्यन्तेलिङ्गसंख्या विभक्तयः—प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे" इति सिद्धान्तात् अत्र भूः भुवः स्वःइति व्याहृतिरूपाणां त्रयाणां लोकानां ग्रहणं अस्ति, ते च व्याहृतयः लोकः, इति नाव्याकृतिः व्याकरणपरीक्षाप्रस्तावे "त्रिलिंगं यो न जानाति" आक्षेपः—उत्तरम्, व्याहृतिशब्दस्य स्त्रीलिंगवाचकतया:—त्रयः इति पुंस्त्व विशेषणं व्याकरणाऽशुद्धि इति आक्षेपः प्रतिवादिनः—स्वस्यैव तस्य व्याकरणज्ञानशून्यतामविचारशीलतां-ईर्ष्यामात्र प्राधान्यतां एव द्योतयति-यथा च पुरस्तात्-प्रदर्शितमेव, व्याहृतिभिः लोकानामभिधेयत्वात् ।

लोकशब्दस्य नियत पुंस्त्वेन त्रयः विशेषणेननिर्देशः, न लिङ्गज्ञानविघातकः प्रत्युत शतप्रतिशतम् लिङ्गाऽनुशासनमेव ॥

एवमेव श्रीगणेशाय नमः, श्रीसरस्वत्यैः नमः उभयत्र चतुर्थ्यन्तपाठे मुद्रणाऽशुद्धिमूलकसविसर्गपाठनिर्दिश्य श्रीकरपात्रस्य व्याकरणज्ञानमाक्षिप्तम्, परन्तु महान् खेदः वाक्यद्वये सविसर्गमुद्रणेन चेदव्याकरणांत्वम् तर्हि अनुपदं ॐ वेदपुरुशाय नमः इत्यत्र अविसर्गपाठो व्याकरणत्वेन कुतो नोद्धृतः पृ० ४६ "छन्दोपदमिति श्रेष्ठं मन्यते यो हि सन्धिकृत्" तथा "श्रीसरस्वत्यै नमः" "श्रीगणेशाय नमः"—इत्यादिषु उपध्मानीयाऽनिर्देशः विसर्गदर्शनाच्च अव्याकरणत्वम् श्रीकरपात्रिणः इति न पर्याप्तम् मुद्रणं त्रुटित्वात् । चेन्नः, तर्हि एक पंक्तावेव "वेदपुरुषाय नमः इति निर्दिष्टे पाठे अविसर्गपाठः कुतो न दृष्टः ।

यदि एतावताऽपि न संतोषस्तर्हि स्वमुखं आदर्शे पश्य ! आदर्शोऽपि स्वकीयो नो चेत्—तर्हि अहं ददामि, गृह्यताम्-तद् यथा भवतः कल्पद्रुमस्य प्रारंभिकपृष्ठेषु द्वादशे पृष्ठे (१२ पृष्ठे) "चातुरवर्गफलप्रदस्तरुरसौ वेदार्थकल्पद्रुमः", इति यतः स्वोकृतं मतः भवतु एव कल्पद्रुमः गुणेषु दोषाऽविष्करणं रूपं सर्वाऽर्थफलं प्रथमं भवद्भ्य एव ददाति—गृहाण ! अस्येव कल्पद्रुमस्य २७ तमे पृष्ठे "विज्ञायतां तावत् इत्युपक्रम्य····नामतः परिगणनम्" इत्यन्ते पाठे मंत्रष्ठित्वेन—मंत्राऽर्थद्रष्ट्रिवशिष्ठाद्रिनां····मंत्रद्रष्ट्रित्वम् इति पौनः पुन्येन पुलिंगस्थाने स्त्रीलिंगनिर्देशः किन्तु भवतः शास्त्रपारङ्गत्वम् क्षिणोति । इत्येव न, अन्यदपि पठ पुस्तकस्याऽस्यैव द्वादशे पृष्ठे चतुर्थश्लोकान्तिमपादे "चातुवर्गफलप्रदस्तरुरसो"— इत्यत्र आद्याऽक्षरे, "च"—कारे चा इत्यात्मिका आदिवृद्धिः अष्टविधव्याकरणेषु कतमेन साधितां, तथ्यमेव एतत् सर्वशादूलविक्रीडितमेव, समूहाऽर्थके यणि—ष्यञिवा निष्पन्नोऽयं शब्दः "चातुर्वर्ग्यं" इति भवति

अतथात्वे—आदिवृद्धिनिमित्तकप्रत्ययाभावे, चकारस्य लघुत्वेन मगणाऽलाभे छन्दोभङ्गः इति एकत्रैव व्याकरणसाहित्यत्रुटिः । अर्थान्तरकल्पना ।

व. क.द्रु. ४७ पृ. वेदार्थपारिजात पर्य्यालोचन उच्छीर्षके ॥ श्रीकरपात्र महाभागस्य व्याकरणादि—परीक्षणमाचरता वे० पा० ५५४ पृष्ठमुद्रित "अत्र मुण्डकोपनिषदि तु महर्षेरङ्गिरसः ब्रह्मविद्याप्राप्तिपरंपरा""शौनकः तं पप्रच्छ" इत्यन्ते पाठे क० ख० ग० घ० संकेतेन दृष्टास्त्रुटयः अपाणिनीयत्वेन उद्धृताः परामेतत् बालबुद्धया छलनमात्रम्—अशास्त्रीयञ्च, अतः वस्तुस्थितिः समाधानञ्च ।

( क ) अङ्गिरस इत्यत्र पंचमी षष्ठी वा

( ख ) अङ्गिरसि द्वितीया विभक्तिप्रसङ्गः

( ग ) वस्तुतस्तुशौनकः अङ्गिरसं नोक्तवान् अपितु भारद्वाजः

( घ ) प्राह भारद्वाजोङ्गिरसे परावराम् ।

**वे० क० द्रु० पृ० ४७ आक्षेप ( क )**

अङ्गिरसः विद्याप्राप्तिः""शौनकः तं पप्रच्छः, अत्र अङ्गिरसः इति पंचमी षष्ठी वा—उभे-अपाणिनीये ।

**उत्तर** :—उक्त तर्क छोड़कर यतिवर की व्याकरणज्ञानशून्यता कहना निम्नोक्ति का स्थल है :

"ऊर्ध्वाऽननस्तुनिष्ठीवन् सूर्यमुद्वीक्ष्यकातरः ।
नाऽपाकुर्वंस्ततस्तस्य लिप्तो भवति विन्दुभिः ॥

एषास्तस्यैव दशा तस्य महाशयस्य भवति, हा ! विभक्त्यर्थज्ञान-निर्णय व्याकरण-न्यायशास्त्र शून्य के लिए दुरूह है, मेरे संस्कृत में लिखे को हर कोई समझ न सकेगा, विवश होकर हिन्दी में लिखना ही पड़ा, सुनिए । उक्त पाठ में अङ्गिरस पद में सम्बन्ध षष्ठी निर्देश है जिसकी सङ्गति मुण्डक उपनिषद् की दूसरी ऋचा में निर्दिष्ट वात्सल्य दृष्टि से अधिकारी भारद्वाज के माध्यम से अङ्गिरस को प्राप्त हुई ब्रह्मविद्यासे है ।

**अयम्भावः**—(क)यह वह विद्या है जिसको परमपुरुषार्थ प्राप्ति के लिए महापुरुषों ने अति परिश्रम से पाया था, वह अनमोल धन है । अतएव मैं उसी तत्त्व के जानने की इच्छा से शरण आया हूँ । "तं पप्रच्छ शौनकः" एवं गुरुत्वाऽदर तन्निष्ठ ब्रह्मविद्या का अतिशय प्रदर्शन संबंध षष्ठी का साक्षात् वाक्य है । एवं कोई अपाणिनीयता नहीं बल्कि विभक्ति को न समझकर पंचमी-षष्ठी के विकल्पभ्रम में उलझनेवाले की-हो अपाणिनीयता सिद्ध होती है ।





( ख ) द्रुमानुयायी लिखते हैं "गौणे कर्म्मणि दुह्यादेः" नियम से वच्धातु के गौणकर्म्म में द्वितीया होती है, सो नहीं जान पाये, : यह भी पित्तोपहृत दृष्टि है, संभव है उक्त कारिका अधूरी ही पढ़ी होगी, इसका उत्तरार्द्ध में बता दूँ—देखिए ! "बुद्धिभयाऽर्थयोः शब्दकर्म्मकाणां निजेच्छया । प्रयोज्यकर्म्मण्यन्येषां ण्यन्तानां त्रादयो मताः" अतः वच् धातु के प्रयोग में उक्त सिद्धान्त अपाणिनीयता कथन स्वयं की-ही अपाणिनीयता का प्रमाण है ।

**(ग) आक्षेपः**—भोः यते ! वस्तुतस्तु शौनकः अङ्गिरसं""नोक्तवान् अपितु भारद्वाजः । **उत्तर**—क्या आप यह बता सकते हो कि यह अर्थ का अनर्थ करपात्री जी के वे० पा० में ५४४ पृष्ठ की कौन सी पंक्ति में हो गया ? प्रत्युत दूसरी पंक्ति में स्पष्ट लिखा है "अङ्गिरसा च शौनकम्प्रति द्वे विद्ये वेदितव्ये इत्युक्तं", जिसका निस्सन्देह स्पष्ट भावार्थ है कि गृहस्थ शौनक ने ज्ञानप्राप्ति के लिए गुरूपसदनविधिपूर्वक सविनय ( पप्रच्छ ) पूछा, तो अङ्गिरस ने शौनक को दोनों विद्या कही, अतः पूर्वाऽपर भाग विच्छिन्न मनघड़न्त अर्थों की कल्पना से अपाणिनीयता कहना वंचना ही है ।

**(घ) आक्षेपः** "शौनकः—अङ्गिरसं नोक्तवान्, अपितु भारद्वाजः" शौनक ने नहीं कहा, बल्कि भारद्वाज ने कहा, एवं इसकी पुष्टि के लिए मुण्डक उपनिषद् का पाठ लिखा, "प्राह भारद्वाजोङ्गिरसे पराऽवराम्" यह तर्क भी आपका गलत है ।

**उत्तर**—'कहों की ईंट कहीं का रोड़ा, भानुमती ने कुनबा जोड़ा,' महाशय जी ! 'प्राह' क्रिया का कर्ता 'सः' है । शुद्धविन्यास शाङ्करभाष्य में स्पष्ट है, यथा—"स चाङ्गिरर्भारद्वारजाय-भारद्वाजगोत्राय, सत्यवाहाय सत्यवाह नाम्ने प्राह प्रोक्तवान्' इसके आगे पूर्ण विश्राम है । परन्तु आप अपने पर्य्यालोचन भाग के पृष्ठ ४७ पर प्राह क्रिया को भारद्वाज के साथ लिख रहे हैं, और इस सत्यता को ओझल करके यदि आप हठ करते रहो कि भारद्वाज से ही हम तो जोड़ेंगे, तो यूं ही सही—हमने यह कब कहा है कि भारद्वाज ने अङ्गिरस को नहीं कही, परन्तु यह तो अनुक्रम प्रथमऋक् से दूसरी ऋक् में विश्रान्त हो जाता है । क्योंकि यहाँ तक ज्ञानप्राप्ति की परम्परा गुरूपसदन विधिपूर्विका नहीं है और तीसरी ऋक् "शौनको ह वै महाशालः"' विधिवदुप" पप्रच्छ । कस्मिन्नु "सर्वमिदं "विज्ञातं भवतीति ॥" विधिपूर्वक गुरूपसदन क्रम से ज्ञानप्राप्ति का उपक्रम करती है तथा इसमें केवलमात्र शौनक अङ्गिरस का ही प्रसंग प्रसक्त है ।, शांकरभाष्य में

स्पष्ट भाव है......,'शौनकाङ्गिरसोः सम्बन्धादर्वाक् विधिवद् विशेषणादुपसदनविधेः' पूर्वेषामनियमः इति। प्रस्तुत में वे. पा. के ५४४ पृ. के उद्धृत पाठ में त्रुटि दिखाने के लिए दूसरी ऋक् "भारद्वाजोऽङ्गिरसे-पराऽवराम्" दिखाकर शौनक नहीं भारद्वाज है इत्यादि त्रुटि बताना आपका केवल वाक्छलन मात्र है।

अयं सारांशः—वस्तुतः शौनक अङ्गिरस के संवाद में यह प्रश्न ही नहीं उठता कि किसने किससे कही।

यह (३) तीसरी ऋक् गुरूपसदन-विधिपूर्वक ज्ञानप्राप्ति-परम्परा की स्वतंत्र मूलस्रोत है, और यही दोनों का संवाद उपनिषद् की समाप्ति तक "तदेतत् सत्यं ऋषिरङ्गिराः पुरोवाच......३. २. ११ तक अविच्छिन्न है।

एवं आदिम और दूसरी—( ब्रह्मादेवानाम् अथर्वणे यां प्रवदेत्...... परावराम् ) मु० १-१ ऋ०१-२ ऋक् से इस लिये स्वतंत्र है कि उक्त दोनों में जो विद्या प्राप्ति-परम्परा कही है, वह वात्सल्य के ऊपर आधारित है"—ब्रह्मा ने पुत्र अथर्वा को,—अथर्वा ने अङ्गि को, अङ्गि ने सत्यवह ( भारद्वाज ) को, और भारद्वाज ने अङ्गिरस को कही। तथा यह सभी विद्या प्राप्ति के लिए गुरुकुल में शिष्य दीक्षा लेकर नहीं पहुँचे, अर्थात् पितृ वात्सल्य परम्परा से भारद्वाज तक चली आई।

ऐसे—तीसरी ऋक् "शौनको हवै" विधिवत् ( गुरूपसदन पूर्वक ) शिष्य परम्परा से विद्या प्राप्ति की—सर्वादिम स्रोत है, जिस विधि का स्वरूप निर्देश इसी उपनिषद् की १-१-१२ "तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत्-समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" ऋक् से क्रम बताया गया है, अतः—प्रथम और द्वितीय ऋक् का इस तीसरी ऋक् से सम्बन्ध जोड़ना ( भारद्वाजोऽङ्गिरसे ) इत्यादि खाली भूल-भुलैय्या ही है।

पृ. वे. क. द्र. पर्या. ४७ पंक्ति १४ से १६

आक्षेपः—किंच "उक्त्वा"........समानकर्तृकत्वाभावात्-अपाणिनीयम्।

निराकरणम्—महाशय जी! उक्त्वा का कर्त्ता भारद्वाज है, यह कौनसी पंक्ति के आधार पर निर्णय दिया? वे. पा. के. उक्त पृ. के पूर्वापरवर्त्ति सं. ५४३ आगे ५४५ किसी पर भी भारद्वाज का नाम दर्शन के लिए भी नहीं मिलता, प्रस्तुत केवल शौनक अङ्गिरस का ही सन्दर्भ है।........जिसमें शौनक प्रष्टा है, अङ्गिरस वक्ता है एवं गुरुदेव को, कृपा प्राप्त विद्या की अतिशयता स्तुतिरूपेण





ऊपर की दूसरी ऋक् में निर्दिष्ट क्रम स्मरण दिलाना उक्त्वा का लक्ष्य है तथा उस ज्ञान को प्राप्त करने के लिये पप्रच्छ सार्थक सिद्ध हो जाता है।

अयं सारः—स्नात्वा, भुक्त्वा, पीत्वा-व्रजतिवत् अत्रापि समानः कर्त्ता शौनक एव महीयस्त्वं विधाया उक्त्वा पप्रच्छ इति स्पष्टं समानकर्तृकत्वं अव्याहतमेव।

मूल उपनिषत् (मुण्डक) में प्रारम्भ की दो ऋक् में भारद्वाज का संबन्ध है जिनमें शौनक का नाम नहीं और जिस तीसरी ऋक् से शौनक अङ्गिरस का प्रसंग है, उसमें ( या यूं कहो कि तीसरी ऋक् से मुण्डक समाप्तिपर्यन्त भी) भारद्वाज का संपर्क नहीं, फिर कहाँ से आपने कल्पना कर ली कि उक्त्वा का भारद्वाज कर्त्ता है और पप्रच्छ का शौनक।

भारद्वाज ने अङ्गिरस को पुत्र-वात्सल्य से वह विद्या दी, परन्तु यहां तक गुरूपसदन विधिक्रम नहीं था, किन्तु शौनक उसी विद्या की प्राप्ति के लिए गुरु अङ्गिरस की शरण गये। जो विधि मुण्डक उपनिषद् १-२-१२ में "तद्विज्ञानार्थम् गुरुमेवाऽभिगच्छेत् समित्पाणिः" ही कही गयी है।

केवल मात्र गुरु अङ्गिरस को निज गुरु भारद्वाज से पाप्त हुई विद्या का "उक्त्वा" कह कर परंपरा बल प्रदर्शित किया है, और तो क्या? साक्षात् योगेश्वर कृष्ण ने भी अर्जुन के प्रति दिये गये ज्ञान में श्रद्धातिशय पुष्ट करते हुए "इमं विवस्वते योगं........एवं परम्पराप्राप्तम्"........इस शैली का आदर किया है।

अतः आपका आक्षेप मदारी का ही तमासा है, "सभायां पण्डिताः केचित् केचित् पण्डित-पण्डिताः—गृहेषु पण्डिताः केचित् केचिन्मूर्खेषु पण्डिताः"। इत्थं करपात्रमहाभागस्य व्याकरणत्रुटिमुद्भावयता निरर्थक एव-"ज्ञानं भवेन्मनुष्याणां श्रुत्वोपदेशमत्यतु" श्लोकबन्धप्रयासः कृतः, छन्दोदुष्टत्वात्। अनुपदञ्च, छन्दः समीक्षासिंहाऽवलोकनभागे वक्ष्यते।

वे. क. पर्यालोचन पृ० ४७ आक्षेपः केवलं अनुष्टुप् छन्द एव प्रायुक्त।

## समर्थनम्—(समाधान)

नैतत् साधारणं छन्दः प्रत्युत गायत्रीशरीरत्वात् परं महत्त्वं अस्य। यतः अष्टाक्षरपादाऽत्मकस्यास्य छन्दसः शरीरं महर्षि पिङ्गलेन गायत्र्या

ष्टुबद्धम्, पि. अ. ३, सू. ३ गायत्र्यावसवः" इति। एवं चतुर्भिः पादैः अस्यैव "अनुष्टुप्" इति संज्ञा। "अनुष्टुप् गायत्रैः" पि. सू. ३-२३, इत्थं "गायत्री वेदमाता च, मातृस्वरूपत्वात् गायत्र्याः (अनुष्टुप्) छन्दः प्राधान्यमभजत। इति अनुष्टुप् छन्दः प्रधानो ग्रन्थः "वेदार्थपारिजातः" वेदमातागायत्रीस्वरूपत्वात् परमाऽर्हणीय एव॥







## अथ छन्दः समीक्षायां सिंहावलोकनम्

वे. क. द्रु. पर्यालोचनभागे पृ० ४७-४८ पृष्ठगत क. ख. ग. निर्दिष्ट भ्रान्तीनां उत्तरम्।

१. अनुष्टुप् छन्दसः साधारण्यदृष्टिः, स्पष्टं वेदेष्वनाऽदरः सामाजिकानाम्। गायत्रीस्वरूपत्वादस्य इति परमं महत्।

(क) आक्षेपः—"प्रादुश्चक्रे भाष्यनाम्ना" इत्यत्र "पंचमं लघु सर्वत्र" नियमेन "भा०" पंचमाऽक्षरस्य दीर्घत्वात्, त्रुटिः",

उत्तरम्—उक्तनियमस्य प्रायिकत्वात् न दोषः। सम्भावये-उक्तनियामकशास्त्रस्य आंशिकमेवाऽध्ययनं साहित्याऽचार्यस्य यत्राऽस्य विकल्पान्तं भागं अपि पठतात्। वृत्तरत्नाऽकरे यथा—

"पंचमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
गुरुः षष्ठं च पादानां शेषेष्वनियमो मतः॥
प्रयोगे प्रायिकं प्राहुः केप्येतद्वक्त्रलक्षणम्।
लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरताकृता॥
अतो न दोषः।

(क/ए) चेन्न—तदापि निर्दुष्टमिदं छन्दः यस्मान्न केवलमनुष्टुप्—अपितु अष्टाऽक्षर पदात्मकेषु "विपुलाऽनुष्टुप्" छन्दो भेदः॥ यथा—"विपुला युग्लः सप्तमः" पि. ५-१७—"यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता" वृत्त०२.५

"इतस्ततः समानीय सारहीनमुदक्षरम्।
प्रादुश्चक्रे भाष्यनाम्ना न लघीयो न विस्तृतम्॥"

वे. पा. पृ. २, श्लोक १८, अत्र द्वितीये 'क्ष' इति वर्णस्य चतुर्थे च 'स्तृ, इत्यस्य सप्तमस्य लघुत्वात्।

तथा च "भ्रौन्तो च" पि. ५-१८, "इत्थमन्या रश्चतुर्थात्" वृ० र० २-८ इत्यनुसारं प्रादुश्चक्रे इत्यत्र 'क्रे' इति चतुर्थाऽक्षरात् परं रगणस्य प्रकृतित्वेन

S I S
तदर्थं, भाष्य ना—सर्वथा दीर्घत्वमेव शुद्धम् अन्यथा 'भा, इत्यस्य-भवत्सिद्धान्तेन ह्रस्वत्वे सगणतया छन्दोनाशः।

अन्यच्च वेदमूलमिदं छन्दः शास्त्रम्—वेदाङ्गत्वेन व्यवह्रियत इति तु भवतापि सर्वथा माननीयमेव यतः सामाजिकानामादिमेन अखिलानन्देन मेरठ-नगरतः विक्रम सं० १९६५ ई० १९०८ वर्षे प्रकाशितपिङ्गलटीकायां अक्षरशः स्वीकृतं २०मे पृष्ठे "त्रिष्टुभे रुद्राः" ३-६ सूत्राधः "**अतएव वेदमूलकमेतच्छास्त्रं वेदाङ्गत्वेन व्यवह्रियते। परम्परासम्बन्धेन वृत्तमूलकत्वात् काव्यशक्तिरपि वेदमूलैव**"

'इति, "तेन" सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"

इति, ('र्षा') वत् श्रीकरपात्र श्लोके "भा" इति पंचमाक्षरस्य दीर्घत्वे दोषं प्रतिवदतो निग्रहायैव! उक्तमन्त्रे "र्षा" इति पंचमस्य दीर्घत्वात्।

(क/बी) पर्य्या० पृ० ४७ पं० १९ "श्रुत्वोपदेशमत्र तु" अत्र छन्दो दोषः॥

साहित्याचार्य! पृच्छामि भवन्तम्, अनुष्टुप् छन्दसि पंचमाक्षरस्य लघुत्व-नियमादिना अन्यानाक्षिपन् स्वात्मानमादर्शे कुतो न पश्यसि। कृपया पठ भवतः त्रुटिः, यथा पुनर्न भवेत्। भवद्रचितेऽस्मिन् श्लोके "श्रुत्वोपदेशमत्र तु" चतुर्थोऽयम्पादः, छन्दोदोषदुष्टः, तथाहि अनुष्टुभिः द्वितीयचतुर्थपादयोः पादाऽद्याक्षरात् परं रगणप्रयोगः पिङ्गलमहर्षिणा निषिद्धः "द्वितीयचतुर्थयोरश्च" पि. सू. ५-११

प्रथमाक्षरात् रगणनिषेधः भवतां पण्डित-अखिलानन्देन तु स्वकृतटीकाया-मस्य सूत्रे "विशेषविधानमेतत् ११ इति विशिष्य स्वीकृतम्-अतः श्रीमतां त्रुटि-रधस्तात् स्पष्टीक्रियते,

S I S
श्रु त्वो प दे श मत्रतु। स्पष्टमेव
निषिद्धस्य रगणस्य प्रयोगः—इति परमाश्चर्यम्॥

**वे० क० पर्य्यालोचन पृ० ४८ "ख" आक्षेपोत्तरम्**

(ख) नवाक्षरतादोषं प्रदर्शयन् मार्कण्डेय-ब्रह्मचारि पद्ये "मुसलगांव गजाननः" इत्यत्र त्रुटिः दर्शिता, अस्तु-परन्तु स्वात्मानं कुतो न पश्यति, साहित्याचार्य!

उत्तरम्—प० पृ० ४६ द्वितीयश्लोकतृतीय पंक्तौ "स ए ब ख ण्डि त वा न त्र"
१ २ ३ ४ ५ ६ ७ ८ ९
इत्यत्र स्पष्टं नवाक्षराणि सन्ति, इति भवतः प्रथमे पादे एव "प्रथमे ग्रासे मक्षिकापातः" इत्यादभाणकं गर्ज्जति। इति समीक्षकसमीक्षा॥





(ख/[illegible]) एवमेव स्वयं शुचिमतिर्ग्रन्थकारः—
स्वयं विशुद्धानन्दः कल्पद्रुमे ४६३ पृष्ठे
"अजानन् ऋषि पाण्डित्यं
१ २ ३ ४ ५ ६ ७ ८
क र पा त्रो त्र प या पुनः॥
१ २ ३ ४ ५ ६ ७ ८ ९

इति नवाऽक्षराणि चकार, नैतदेव "त्रोऽत्रप इति मुद्रणाऽशुद्धिमपि नाऽजानत्॥

प० पृ० ४८ आसमाप्ति वेदपारिजाते श्रीकरपात्रस्य केवलं एक एव—श्लोकः—शार्दूलविक्रीडित छन्दसः ज्ञान बोधकः अन्यथा, अनुष्टुवेव, परन्तु तत्राऽपि त्रुटिरिति करपात्र वैदुष्यं दूष्यमेव

आक्षेप प० पृ० ४८ छन्दः समीक्षान्तर्गतो भाग०.......

(ग) मम विचारे "येषां पितृपितामहादि पुरुषाः॥ इत्यत्र 'पि, इत्यक्षरं लघु यावताऽत्र दीर्घं स्यात्—कोऽत्रविवादः?

**समाधानम्**—समीक्षक महाभाग! कया योगदृष्ट्या—करपात्र रचितोऽयं श्लोक इति निश्चितम्? येन श्रीकरपात्रमहाभागान् आक्षिपति, प्रथमं वे० पा० ४ पृष्ठगत उपक्रमपाठं पठ। तथाहि

"कार्य्येऽस्मिन् विनियुक्तश्च द्विवेदो व्रजवल्लभः
मार्कण्डेयो ब्रह्मचारी,.... पट्टाभिरामशास्त्री च....
चत्वारः सुधियः, शिष्यासक्ता ग्रन्थप्रकाशने
तदर्थं कुर्म्महे दिव्यां स्मृतिं नारायणस्य वै॥

श्लोक० ३३ से ३६, "सम्भावये, रेखाङ्कित तत्त्व (शिष्य) द्वारा कदाचिद् गच्छतः स्खलनम्। "दुरूहः खलु वाक्यार्थज्ञानबोधः" इत्थं कथं भवान् श्रीकरपात्रविभूतीन् नामग्राहमाक्षिपति।

**प्रत्युत्तरम्**—सम्भावये केनचित् शिष्येण "येषाम्पूर्व्वजदिग्गजाः सुपुरुषाः" इत्यस्य भावनावशेन (पितृपितामहादि पदलेखनं स्पष्टतार्थं कृतं स्यात् परन्तु भवतां ग्रन्थकारेण तु चित्रपृष्ठे वेदांगनद्यम्बुधिः इति विशेषणाऽनुगुणं आत्मनः प्रशंसां विधाय, वे० क० द्रु० १० पृष्ठे ५० श्लोके "सोऽहं वेदसुभाष्यभूमिरचना शङ्का-

समाधिं दधे इति मुक्तकण्ठं प्रतिज्ञातमस्ति, अतः वयं सगर्वं [illegible]ो ग्रन्था-कारस्यैव साहित्याम्बुधिपारगत्वं साक्षात् नामग्राहं आक्षेप्तुं प्रभवः। तदित्थम्-

वे० क० द्वु०पृ० १९१ पं० २ से ५,

"निरगमत् प्रग एव दिनान्तके
निववृते नहि भ्रान्त उदीर्य्यते
कुटिलतां त्यज भोः चरमायुधि
ऋषिवराऽनुचरो रुचिरो भव"

द्रुतविलम्बितमिदं छन्दः।

तल्लक्षणं तु "न् भौ—भ् रौः नगणभगणौ—भगणरगणौ च भवतः" "द्रुत विलम्बितं—न् भौ भ रौ" पि० ६-३१ = द्रुतविलम्बितमाह नभौ भरौ" वृ० र ३-५, पिङ्गलकेदाराभ्याम्।

द्रु त विलम्बित मा ह न भो भ रौ
**समन्वयः** । । ।ऽ । ।ऽ । । ऽ । ऽ

भोः समीक्षाकारिन् पिङ्गलक !। अत्र स्वात्मनो दशां पश्य। तव "निरगम, दितिकाव्ये द्वितीयपादे द्वितीये गणे, 'हि, इति षष्ठाक्षरस्य "ध्रादिपरः" पि०' अ० १, ११ नियमात् भ्रान्तेत्यत्र 'भ्रा, इत्यक्षरस्य संयुक्तत्वेन ........."हि, "इत्यस्य गुरुत्वं स्यात्—इत्थं भगणे प्रयोक्तव्ये रगणः प्रयोगः किं न त्रुटिः? स्पष्टार्थमधस्तात् यथासमन्वयः—

। ।। ऽ।ऽ ऽ। । ऽ। ऽ
नि व वृ—ते नहि भ्रान्तउ दीर्य्यते। संभावये मिश्रत्वात् द्रुतविलम्बितत्वाच्च स्खलनम्—जातं समीक्षकस्य-ग्रन्थनिर्मातुश्च।

भाविनि मुद्रणे भवतां सरलतायै इत्थं पठ्यताम्, (निववृते नहि मुग्ध इतीर्यते) इति।"

अयं सारः = प्रशंसकस्य सुरेन्द्रशास्त्रिणः ग्रन्थकर्तुश्चापि स्वयं नवाक्षरो-दोषः, तथा ग्रन्थकर्तुश्च अनुष्टुबन्यत् द्रुतविलम्बितन्तु गणदोषदूषितञ्च, इति कालग्रस्तः किमन्यान् गोपायेत्।

पृ० ४८ (काव्यदोषनिरीक्षा)

अत्र क = भागे अस्य इति पदं कस्य परामर्शकम्,

उत्तर="इदमस्तु सन्निकृष्टे समीपतरवर्त्ति चैतदोरूपम्" इति विश्लेषणात् प्रसक्तस्यार्थस्यैवबोधात् तस्य च वे० पा० पृ० ३ श्लोक २६ तः आरभ्य ३२





श्लोकपर्यन्तं विचिक्ष्महे, विदध्महे, व्याप्रियामहे, श्रमः, इत्यादिभिः, प्रसक्तस्य ग्रन्थस्य बोधः निर्बाधः।

(ख) भागे च स्वयं २७ पंक्तौ अधस्तात् २ पंक्तौ स्वीकृत्य गौरवादि प्रदर्शनछद्मना दोषदर्शन—मदार्शनिकम्—"फलमुखगौरवं न दोषाय" इति व्याकरणसिद्धान्तात्, अतो विरमामः।

॥ वेदार्थ-करण-समीक्षा ॥

विषयः="त्र्यायुषं जमदग्नेः, कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नोऽस्तु त्र्यायुषम्"—इत्यत्र त्रिः इति संख्यायाः शत पदे सम्बन्धः, येन त्रिगुणितं शतम् इति प्रकल्प्य जमदग्नेः चक्षुष्ट्वमर्थं, कश्यपस्य कूर्मत्वं अर्थं विभाव्य त्रिशतात्मक वर्षायुः मंत्रप्रार्थनाद्वारा, अस्तु, **इति दयानन्दः**।

त्रिः संख्या आयुषि प्रसिद्धासु बाल्ययौवनजरासु समन्वेति इतितदुक्तं परमाणुः न अस्माकमस्तु इति **सैद्धान्तिकाः** तदनुयायिनः यतिवर्य्याश्च।

**अत्र कतमोर्थः निर्दिष्टः इति**

इदञ्चान्यत्=ऋषेः दयानन्दतः प्रथमं तत्कल्पितोर्थः सर्वथा अप्रसिद्ध एव, इति समीक्षा तत्रैव युज्यते, करपात्रयतेः अर्थः सर्वैरपि भाष्याचार्यैः स्वीकृत एव अनूदितः इति समीक्षायायाः प्रश्न एव न। अतः त्र्यायुषं इति पदेन बाल-यौवनवार्धक्य धर्मवत् आयुष एव बोधः। सर्वत्र वेदपुराणादिषु च आयुरनुयो-गितावच्छिन्नशतशब्देन सङ्गतत्वात्।

ब्राह्मणग्रंथानुसारं—जमदग्निशब्देन चक्षुषः, कश्यपशब्देन प्राणस्य वाच्यत्वेऽपि किम्? प्रायः स्वभाव एव, प्रार्थी यदपि वांछति तत् न परिच्छिन्नं वांछति, इति सर्वैरेव परमायुरभीष्टम्। परमायुश्च ज्योतिःशास्त्रे यथा बत्रिंशत्-अल्पायुः-आषष्ठि मध्यमायुः-अष्टोत्तरशतं परमायुः। श्रीमद्भागवते च "सम्वत्सरशतं नृणां परमायुर्निरूपितम्" ३-११-१२, "पितृदेवमनुष्याणां आयुः-परमिदं स्मृतम्" ३-११-१६ किमन्येषां ब्रह्मणोऽपि—"एवं विधैरहोरात्रैः काल गत्योपलक्षितैः—अपक्षितमिवाऽस्याऽपि परमायुः वयः शतम्' ३-११-३२ इति न कुत्रापि त्रिशतात्मकत्वं ध्वन्यते, प्रत्युत आयुषः पर्य्यायः वयः शब्दः कोशबला आयुषः वा० पौ० वृ० अवस्था कथयति, यथा—"वयो वर्षे विबाल्यादि यौवनेषु नपुंसकं" इति विश्लेषणात् त्रित्वं 'आयुषो विशेष्यतामनुवदति, न पुनः शतस्य। त्रिशतत्वस्य परिच्छिन्नत्वादरुचेः। "शतायुर्वै पुरुषः" इति श्रुतो

शतपदं न स्वार्थे परं—आनन्त्ये तात्पर्य्यात् इति० भा० टीकायां सर्वतन्त्रस्वतन्त्राः श्रीवंशीधरजी महाभागाः । अतएव "शतं जीवेम शरदः", "कुर्वन्नेवेह कर्म्माणि जिजीविषेच्छतं समाः" इति ईशोपनिषदि, "शतायुषः, पुत्र पौत्रान् वृणीष्व" इति कठे, इति सर्वत्रैव शतशब्दः त्रित्वादिना परिच्छिन्नं आयुः न वक्ति ।

प्रत्युत श्रीकरपात्रानुमत बाल्याद्यवस्थायुतस्य आयुष उपलब्धिः भृशं दृश्यते, तथाहि—"मातापितृमयो बाल्ये यौवने दयितामयः । पुत्रपौत्रमयश्चान्ते मूढो नात्ममयः क्वचित्" अतः त्रयाणां आयुषां समाहारः त्र्यायुषं इति शास्त्रसम्मतोऽर्थः । वे० क० द्रु० ५० पृ० कोष्ठकान्तर्गतः पाठः भवतां ( त्रिणिशतानि वर्षाणि इति यावत् ) अनर्थकल्पनैव । व्यपेक्षेकाऽर्थीभावलक्षणस्य सामर्थ्यस्य त्रिः पदादव्यवहितं पठितेन आयुषा पदेनैव सामर्थ्यम्, नतु अध्याह्रियमाणेन शतपदेन, येन भवत्कृतः त्रिशतवर्षात्मकः अर्थः सिध्येत् । पुनश्च त्रिरिति संख्यया शत इति संख्यायां गुणनफलं न केनाप्यनुमतं बिना दयानन्देन, प्रत्युत आयुषि समन्वितः, यथा कठे—"शताऽयुषः पुत्रपौत्रान् वृणीष्व," इत्यत्र भाष्ये श्रीशंकरः शताऽयुषः= शतं वर्षाणि आयूंषि एषां तान्शतायुषः" इति । एवमेव "स्वयञ्च—जीव शरदः शतम्" अस्य भाष्ये "शरदो वर्षाणि यावदिच्छसि", इति त्रित्वाद्यपरिच्छिन्नस्य अनंतत्वस्यैव बोधः ( ग्रहणम् )

इत्थं त्रयाणां आयुषां समाहारः त्र्यायुयं इत्येव पाणिनीयं, नतु त्रीणि शतानि वर्षाणि तत् त्र्यायुषम् ।

यच्च तर्कितं—वे० क० द्रु० पृ० ५०, पंक्ति—१४, "आसां तसृणां अवस्थानां सर्वैरेव मनुष्यै आप्ततया परमात्मानम्प्रति तदर्थं प्रार्थनस्य व्यर्थत्वात् इति तदपि हीनभावितमेव,—को नाम सुखार्थी पूर्णमुपेक्ष्याऽपूर्णं याचेत् । |शतमितायुषः सर्वैः प्राप्यत्वमपि शास्त्रप्रत्यक्षाऽसिद्धमेव", "आशीतिकाः विपद्यन्ते केचित्सप्ततिकाः नराः—परमन्ये स्थिता षष्ठी तथैवाऽनिश्चितं पुनः" **इति गारुडात् ।**

**स्वयं च भवतोयोगी दयानन्द एवं स्वाऽभिमत त्र्यायुषं प्रार्थनया शतशतान्यपि वर्षाणि स्वायुषः न जीवितुं शशाक, किम्पुनस्तमनुसरतां गाथा ''' अन्यथा तु पतत्यन्धाऽनुगोन्धगः ।**

तत्रायं सारः—न तावत् कुत्राऽपि दयानन्दकल्पितं त्रिशतात्मकं आयुषःस्वरूपं उपलभ्यते, प्रत्युत—शतात्मकं तु सिद्धान्तभूतं करपात्रयतिवराऽनुमतं सर्वैरपि शास्त्रैः नियम्यते ।





**यथा अधस्तात्—**

१. "जिजीविषेच्छतं समाः, — ई० उ०
२. "शतायुर्वेपुरुषः, — श्रु०
३. "शतं जीवेम शरदः, — यजु०
४. शतायुषः पुत्र पौत्रान्वृणीष्व, — क० उ०
५. "संवत्सर शतंन्नृणां परमायुर्निरूपितम्०" — भाग०
६. "पितृदेव मनुष्याणां आयुः परमिदं'''स्मृतम्" — भाग०
७. "एवंविधैरहोरात्रैः कालगत्योपलक्षितैः
अपक्षितमिवाऽस्यापि परमायुर्वयः शतम् — भाग०
८. आयुर्वर्षशतं नृणां परिमितं
रात्रौ तदर्द्धगतम्-तस्यार्द्धस्य
परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः
शेषं व्याधिवियोगदुःखसहितम्''' — भ० हृ० वे० श० १०७
९. "क्षणं बालो भूत्वा क्षणमपि युवा काम
रसिकः'''जराजीर्णे रंगे नट इव
बलीमण्डिततनुः, भ० हृ० वे० श० ११२

—किम्बहुना—इत्थं सर्वत्रैव आयुषि अवस्थानां त्रित्वं साधितम्, नतु शतवर्षाणां त्रित्वेन हतं त्रिशतात्मकम्—इष्टम् ।

**तथैव अवस्थायां स्वातन्त्र्येण त्रित्वं यथा—११**

१. मातापितृमयो बाल्ये यौवने दयितामयः
पुत्रपौत्रमयश्चान्ते मूढो नात्ममयः क्वचित् ११ गरुड़
२. "तस्यार्द्धस्य परस्य चार्द्धमपरम् बाल्यत्ववृद्धत्वयोः—शेषं व्याधिवियोगः''' — भ० हृ०
३. "पिता रक्षति कौमारे भर्ता रक्षति यौवने
पुत्रस्तु स्थविरे भावे"
४. "देहिनोस्मिन्यथा देहे कौमारं यौवनं जरा" — गीता २-१३

इत्यादि भूयोभिर्निदर्शनैः त्रि इति संख्यायाः आयुष्येव साक्षात् योगः, नतु शते, शाब्दबोधे आकांक्षा योग्यतादीनां मूलत्वेन, नहि महानसे सैन्धवप्रयोगेण अश्वः समानीयते । नैव चक्षुषः प्राणस्य च त्रिशतवर्षात्मकमायुः निर्णीतं, नेव च ऋष्योः (जमदग्नेः कश्यपस्य च) त्रिशतवर्षात्मकाऽयुषः प्रकृतिरेव निर्णयः ।

नाऽपि भवतां महर्षि दयानन्द द्वारैव : "त्र्यायुषं जमदग्नेः" इति मंत्रशक्त्या त्रिशतवर्षात्मकाऽऽयुषा-स्वाऽभीष्टो जीवनोपभोगः।

इति सिद्धम्--त्र्यायुष-पदं सर्वथा बाल्ययौवनवृद्धावस्था-युतमायुष एव निर्दिष्टं बोधकम्, ॥ अत्र श्रीचरणः-कलौ शतायुः द्वापरे द्विशतं त्रेतायां त्रिशतायुः कृते चतुः शतम् ॥ इति शिष्टाः

-इदमत्र विशेषतोऽवधारणीयं प्रस्तौमः। यद् दयानन्द विशुद्धादीनां आर्य्याणां (समाजिकानां) स्वकीयः पुनः छन्दः पदार्थभूतोऽथर्ववेदोऽपि स्वांस्तान्, छद्मकारिणोऽवगत्य, अस्मदीयमेव सिद्धान्तं (शतवर्षात्मकमेवायुषोपभोगं) प्रमाणयति, न पुनः त्रिशतायुष्ट्वत्वाम्। तथाहि अथर्व का ३, सू० सू० ४ ऋ० ७

"पथ्यारेवती (रेवती) र्बहुधा विरूपाः सर्वाः संगत्य तुरीयस्ते क्रान्-तास्तवा सर्वा सम्बिदानाव्ह्यन्तु दशमीमुग्रः सुमनावशेह।"

अत्रभाष्यम्-शत्रुत्सादितस्य राज्ञः विजयोत्तरं पुरः प्रवेशकर्म्मणि शताऽऽयुषा सुखनिवासाय (निवासकर्म्मणि) प्रयुक्तः मंत्र, अस्याऽर्थे "दशमी-मुग्रः सुमनावशेह" इति भागे दशमी इति पदं विवृण्वन् निर्दिशति=तथा-हे राजन्। तास्ताः सर्वाः देवताः ऐकमत्येन राष्ट्रप्रर्वे राष्ट्रप्रवेशाऽर्थम् ह्वयन्तु-ततः त्वं सन्तुष्टमनाः सन् दशमीं नवति सम्वत्सरोर्ध्वंभाविनोवर्षदशात्मिकां (१०×१०=१००) चरमाऽवस्थां वसनिवसजरापर्य्यन्तं स्वकीयं राज्यं निष्कण्टकं भुंक्ष्व, इति स्पष्टं बाल्युवजरेति त्रित्वनिष्ठ-प्रकारतानिरूपित-शतवर्षाऽऽत्मकवयोविशेष्यताको बोधः त्रिशतात्मकायुषः अर्थकल्पकान् आह्वयते।

हिन्दी—कहने का भाव यह है अब तो दयानन्द जी का अपना अथर्व वेद भी विचारों का साथ छोड़ गया, तीन सौ वर्ष की आयु में अर्थ कल्पना को साफ-साफ ही झुठला दिया।

## उपसंहार

अथ च समाप्तौ मंगलादीनि मंगलमध्यानि "मंगलान्तानि च प्रथन्ते" इति भाष्यकारोक्तेः समाप्तौ मंगलाचरणरूपेण इदमपि नैव-विस्मरणीयम्भवति, 'यद् विशुद्धानन्दः पदे पदे

१. वे० क० द्रु० पृ० ४४९="व्याकरणं चरित्वावै लेहित्वा ब्रह्मसूत्रकम्—न्यायशास्त्रं समाघ्राय पण्डितव्याघ्र आगतः"

२. वे० क० द्रु० पृ० १२९="नैयगोमधूकोद्रो हि:...सौरभं महत्"





३. "कल्पद्रुमह्यपि ...धी सङ्गतन्वपि निकृन्तति"

४. "चर्तुर्वेदः गतः काशीं यः षड्वेदबुभूषया ...द्विवेदो भूय चायातः"

५. "स्वामी देवदयानिधिस्तु सकलानाऽदर्शयत्"

इति अनेकत्र व्या० सा० त्रुट्य आश्रित्य विशुद्धो गर्जति, निर्मलोक्तिः संघटते १२९ निर्मलोक्तिः स्मृतिमायाति १४०.घटते चेयं निर्मलोक्तिः—सत्या—यत् २८७. निर्मलोक्तिरियमत्र—२३०. सत्यमेव निर्मलोक्तिः इह सङ्गता—४४९. इत्यादयः. प्रस्तुतेषु सङ्केतरूपेण, लेहित्वा इत्यत्र, सेट्त्वनिर्देशः—व्याकरणं चरित्वा इत्यत्र "न प्रथमात् स्नो इति पिङ्गल नियमेन आद्याक्षर......

। । ऽ

"व्या" इत्यतः परं (क र णं) सगण प्रयोगः, निषिद्धत्वाच्छन्दोदोषः धो सङ्गतन्वपि इत्यत्र "नु पृच्छायां विकल्पे च" इति कोषशक्त्या अतदर्थक वर्ण-प्रयोगः, अत्र "हि" इत्यस्य साहित्यात् इत्ययमपरो दोषः चतुर्वेदः गतः काशीं इत्यत्र अमत्वर्थीय पदप्रयोगः व्याकरणगतोदोषः, स्वामोदेवयानिधिः इति प्रथम-पादोत्तरं—द्वितीये पादे ते इति बहुवचनार्थक सर्व्वनाम्ना उद्देश्यविधेयबोधानु-पलम्भदोषः, इत्यादि भूयः स्खलनं कुर्वन्नपि अन्यान् आक्षिपति इति खेदः अतो विरममाम।

समरीतिर्निर्दाताजाः परब्रह्म सनातनः।
जयनाज्जानकीनाथो वेदवेद्यो नहानतिः॥
ankurnagpal108@gmail.com

॥ श्रीहरिः ॥

# वेदार्थपारिजातभाष्यवार्तिकम्

## छन्दः पदस्य अथर्ववेदवाचकत्वसमीक्षा

कुतश्चित् इष्टकानीताः
कुतश्चित् शर्कराः कणाः
"दयानन्दो" भानुमती
कुटुम्बमनुगच्छति (।)

•

कहीं का ईंट कहीं का रोड़ा।
भानुमती ने कुनबा जोड़ा॥

•

[illegible]
[illegible]
ankurnagpal108@gmail.com



## छन्दः पदस्य अथर्ववेदवाचकत्वसमीक्षा

१ दयानन्देन ऋ. भा. भू. स्वग्रन्थे १० पृष्ठे "ऋचः सामानि जज्ञिरे - छन्दांसि ज. तस्माद्यजु....." इति यजुर्मन्त्रमुद्धृत्य छन्दः पदेन—अथर्ववेदस्य ग्रहणं कृतम्।

अथ तत्पुजारिणा विशुद्धानन्देन स्व वे. क. द्रुमे व २७ पृ० ७ पङ्क्तौ "यतः छन्दः पदं अथर्ववेदस्याऽपि वाचकम्" इति तत् परिपुष्ट्यै लिखता "यत्र ब्रह्मा पवमानः २ छन्दस्यां वाचं वदन्" प्रमाणतया उपन्यस्तम्।

इदं तुच्छम्=उभयोरेव व्याकरणशब्दशक्तिज्ञानशून्यतोदाहरणमेव। यतः व्याकरणाचार्यो विशुद्धानन्दः स्वग्रन्थे ७ पङ्क्तौ रेखाङ्कितस्थले छन्दः पदं वाचकत्वेन उपन्यस्यति।

अतः प्रथमं वाचकत्वज्ञानं आवश्यकम्, इति, साक्षात् संकेतिताऽर्थाऽभिधायकस्यैव वाचकत्वं यतो भवति। अष्टविधशक्तिग्राहकपदार्थेषु केनाऽप्येकतमेनाऽपि अथर्व नाम्नि वेदे संकेताऽदर्शनात्, तथैव "ईश्वरसंकेतः शक्तिः "तयाचाऽर्थबोधकं पदं वाचकम्" इति भट्टाचार्य्य श्रीगदाधरेण सिद्धान्तितत्वात्, अत्र ईश्वरपदं नित्यत्वपरिचायकमतः नित्यसंकेतः एव शक्तिः, तथा चाऽर्थबोधकं पदं वाचकं भवति, यथा गोत्वादिविशिष्टबोधकं गवादिपदम्। इत्थमेव "गायत्री प्रमुखं छन्दः" इत्यमरः "छन्दः पद्येऽभिलेखे च" इति च, तथा छन्दः पद्ये च वेदे च, स्वैराचाराऽभिलाषयोः" इति मेदिनी को. इति कोषबलादपि, अथर्व नाम्ना प्रसिद्धे वेदे साक्षात् संकेताऽनुपलम्भात् वाचकत्वकथनं शास्त्रज्ञानशून्यतेव। अपि च मेदिन्यनुसारं वेदत्वाऽवच्छिन्नप्रकारतां वेदसामान्यविशेष्यताऽनुगुणत्वं सर्वसम्मतमेव, तच्च ऋग्वेदे, यजुर्वेदे, सामवेदे, तथा अथर्ववेदे च अविशिष्टम्।

एवमेव अमरकोषे स्वराणां भेदविधौ रामाश्रमाऽचार्य्येण "उदात्तश्चाऽनुदात्तश्चस्वरितश्च स्वराश्रयः—चतुर्थः प्रचितो नोक्तो यतोऽसौ छान्दसः स्मृतः" इति विवृण्वता प्रचितस्य छन्दः क्षेत्रव्याप्तिमुखेन वेदसामान्यज्ञानस्यैव शक्यत्वेन स्वीकारात् न पुनः विशिष्टस्य अथर्ववेदस्य।

अथाऽन्यत् "गायत्री प्रमुखं छन्दः" इत्यमरकोषबलात् अष्टाऽक्षर-प्रकृतिके गायत्रे एकाऽक्षरवृद्धिप्रकृतिकेषु" उष्णिक्–अनुष्टुप् बृहती पङ्क्ति—त्रिष्टुप्-जगती-अतिजगती-शक्वरी, आदिषु गायत्र्याः प्रमुखत्वप्रतिपादेन गण-प्रकृतिकेषु पद्येषु एव शक्तिः। इति केनाऽपि शक्तिबोधक शास्त्रेण छन्दः पदं—न अथर्ववेदं अभिधत्ते।

अयमेवार्थो यथा निघण्टौ, "छन्दोभ्यः समाहृत्य समाहृत्य व्याख्याताः" अत्र श्री दुर्गाऽऽचार्य्यः "छन्दांसि मन्त्राः" इत्यर्थः, इत्थं वृक्षाः वनमितिवत् मन्त्र-प्रधानान् ऋग्यजुः साम्नाऽथर्वाऽख्यान् कामं छन्दः पदं अभिदधीत, परं न साक्षात् अथर्ववेदवाचकमेव, इति व्याकरणज्ञानवान् कथयितुं प्रभवति। तथा च पतञ्जलिरपि "षडङ्गो वेदोऽध्येयो ज्ञेयश्च" तत्र-शिक्षाकल्प-व्याकरणम् निरुक्तम् छन्दः ज्योतिषम्" इति छन्दसः अंगेषु पठनात् अंगिनो-वेदात् सर्वथैव अन्यत्वं प्रदर्शितम्।

यत्तु दयानन्दीयाऽर्थं—( छन्दांसि-पदेन अथर्ववेदग्रहणम् )––परिपुष्ट्यै तदनुगामिना विशुद्धानन्देन वे० क० द्रु० स्व ग्रन्थे २६ तमे पृष्ठे "यत्र ब्रह्मा पवमान-श्छन्दस्यां वाचं वदन्" ( छन्दस्यां-अथर्ववेदीयां वाचं वदन् ) "इति ऋग्वेद पाठ : उद्धृतः तदपि छलनमात्रम्, यतः यदि हि छन्दः पदं अथर्ववेदे शक्तं भवेत् तदा अथर्ववेदीयां इति विशिष्य प्रतिपादनं व्यर्थं, छन्दः पदेन अन्यस्याः वेदत्रय्याः स्वत अनवबोधात्। विशेषणस्य साजात्य व्यावर्तकत्व स्वभावात्। एवं स्व—पादे स्वयं कुठाराऽघातो विशुद्धस्य। अतः "छन्दांसि जज्ञिरे" इति याजुषे "छन्दांसि।" इति पदस्य अथर्ववेदवाचकत्वकथनं सर्वथा निर्मूलम्।

यत्तु वे० क० द्रु० २७ पृष्ठे गोपथब्राह्मणस्य वचनं स्वोक्तार्थपुष्ट्यै उद्धृतं "तस्मादु यजमानो भृग्वङ्गिरोविदमेव तत्र ब्रह्माणं वृणुया" दिति तत्तु आम्रप्रश्ने-कोविदारवचनमात्रम्, तत्र छन्दः यदस्य मूलपाठे अदर्शनात्। भृग्व-ङ्गिरो विदमेवेति पाठेन अथर्ववेदज्ञत्वमूलकं ब्रह्मणो ग्रहणं विशुद्धाऽनन्दस्य अशुद्धाऽनन्दत्वमेव व्यनक्ति, ब्रह्मा हि न केवलं अथर्वविदेव भवति, "ब्रह्मात्वो वदति-जातविद्यां-अनया ऋचा ब्रह्मणः सर्ववेदज्ञानवत एव ब्रह्मत्व पदयोग्यत्वे-स्वीकारात्", "ब्रह्मा सर्वविद्यः सर्वंवेदितुमर्हति"-लक्षणात्। यजुपन्त्रे "छन्दांसि" पदस्य वैदिकगायत्र्यादिजगत्यन्तेषु रूढित्वात् छन्दस्त्वेव शक्तिग्रहः नत्वथर्ववेदे पिङ्गलसूत्रे, ५ अ०, "वृत्तम्" इत्यधिकारसूत्रेण गायत्र्यादि विभूषितेषु छन्दस्त्व जाति स्वीकारात्। तत्र ऋग्यजुःसामसुबहुलम्, अथर्ववेदे तु प्रायशः मंत्राणां एक





वृत्तत्वमेव। न चैवं यजुर्मन्त्रे चतुर्थस्य-अथर्ववेदस्याऽग्रहणात् न्यूनता, तन्न ऐहि-कोपयोगिसाधनभूतेऽथर्वे त्रयीगतानां मंत्राणां संहृत्य स्थितेः "ऋचः सामानि जज्ञिरे, इति मंत्रपठितमूलभूत त्रय्या एव बोधात्, सूत्रवत् निदर्शनाच्च, "ऋग्वेदं भगवोऽध्येमि सामवेदमाथर्व्वणं चतुर्थ" मित्यादिना स्पष्टीकृतत्वाच्च।

• पुनः यच्च, विशुद्धेन निजग्रंथे ३२ पृष्ठे छन्दांसिपदेन अथर्ववेदार्थ साधनाय "यद्येवं किञ्च ऋचो यजूंषि सामानि छन्दांसि" उद्धृत्य "इति स्थले छन्दः पदम्" अथर्ववेदपरमितिनिश्चितं तदपि वञ्चनमेव, तत्रमूलपुस्तके यथा–कथित पाठाऽदर्शनात् शुद्धः पाठः बृ. आ. ५—१४—२ यथास्ति अक्षरशः लिख्यते "ऋचो यजूंषि सामानि इत्यष्टाक्षराणि" इत्थमस्ति, अतः छन्दांसि इति प्रक्षेपः वञ्चनैव।

इदमन्यदपि अधीताम्––सामाजिकानां महर्षि दयानन्देन ऋ० वे० भा० भूमिका ग्रन्थे १ पृष्ठे "यस्मादृच अयातक्षन-अथर्व्वाङ्गिरसोमुखम्" इति अ० वे० का० १० प्रे० २३ अनु० ४ मंत्र २ समुद्धृत्य अङ्गिरस इतिपदस्य यस्य परमेश्वरस्य अथर्ववेदो मुखमयमर्थः कृतः, इत्यहोसर्वशास्त्रज्ञता। तत्र वयं पृच्छामः कस्मिन् शब्दकोषे परमेश्वर नामसु "अङ्गिरस" इति पर्य्यायेण सङ्केतः, प्रत्युत कार्य्यत्वे-नोपलम्भात् ईश्वरादपरस्तु सम्भवति, तद्यथा-बृ० आ० उ०, २ अ० ५ ब्रा० १७ ऋ, ( मूलम् ) "ऋग्वेदो-यजुर्वेदः सामवेदः अथर्व्वाङ्गिरसः-इतिहासः पुराणं-विद्या-उपनिषदः श्लोका······ अयं लोकः परलोकश्च, सर्वाणि भूतानि वाचैव" इत्यस्य टीकाकारैः-निम्बार्कसम्प्रदायाऽनुयायिभिः न्यायशास्त्र-भास्करैः "अथर्वणाय दधीचेः" इति अथर्वज्ञस्य ( परमेश्वरादभिन्नस्य कार्यरूपस्यव्यक्तेः ) स्पष्टं निर्देशः कृतः, अथ आसीच्च स अङ्गिरागोत्रः, तद्यथा भागवत एक० ६, अ० १५ "कुमारो नारद ऋभुरङ्गिरा देवलोऽसितः" इति सिद्धेशकोटियातिषु परिगणितः। अतः शाङ्करभाष्ये च "यद् ऋग्वेदो यजुर्वेदः सामवेदः अथर्वा-ङ्गिरसः चातुर्विधं मन्त्रजातं" इति विवृण्वता अथर्ववेदस्य मंत्रात्मकत्वेन वेदत्वं स्वीकृतम्, नतु छन्दस्त्वेन। पुनश्च याज्ञव० स्मृतौ "मन्वत्रिविष्णुहारीतयाज्ञ-वल्क्योशनोऽङ्गिराः यमापस्तम्बसम्वर्त्ताः कात्यायन बृहस्पतिः" इत्थं स्मृति-कर्तृषु अङ्गिरसः साक्षात् नाम परिगणनं विद्यते न पुनर्वेदकर्तृषु।

यच्च दयानन्देन निज ऋ० वे० भा० भूमिका ग्रन्थे १६ पृष्ठे "अग्नि वाय्वादित्याङ्गिरसाम्" अग्ने ऋचः, वायो यजुः, सूर्यात् साम, श० कां० ११-५ उद्धृत्य अथर्वाङ्गिरस ऐकात्म्यं साधितं, तदपि तुच्छं उक्तपाठे अथर्ववेदस्य

अङ्गिरस सहाऽनुयादानात् । तथा च "आदित्यानामहं विष्णुः ज्योतिषां रविरं-शुमान्-मरीचिर्मरुतामस्मि" गीता १०-२१, सूर्य्यादीनां विभूतिषु परिगणनं परमेश्वरात्तेषामभिन्नत्वं प्रतिपादयति, परं अङ्गिरसः ( दयानन्दीय परमेश्वरस्य) कुत्रचित्स्मरणमपि न ।

अथ च दयानन्दः तदीयो विशुद्धानन्दश्च वेदचतुष्टयस्य परमेश्वरात् उत्पत्ति मनुते, यदा च नित्यानां वेदानां उत्पत्ति-प्रतिपादनं अयुक्तम्, "यद्यद्-जन्यं तत्तदनित्यमिति सिद्धान्तेन जन्यपदार्थस्याऽनित्यत्वेन स्वस्यैव महर्षेः वेदनित्यत्वस्वीकृतिसिद्धांतशिरसि वज्रपातो भवति इत्येको महान् दोषः ।

अपरञ्च—छन्दांसि जज्ञिरे इति यजुः मन्त्रे छन्दांसि पदेन अथर्ववेदार्थ-साधनाय वे० क्र० द्रुम० २६ पृष्ठे "यत्र ब्रह्मा पवमानः छन्दस्यां वाचं वदन्" इति ऋगुद्धृत्य, भृग्वङ्गिरोविदमेव तत्र ब्रह्माणं वृणीयात्" इति च गो० ब्रा० वाक्यं कृतवान्, एवं परमेश्वरे तथा अङ्गिरसि च अभिन्नत्वमुद्भावयन् अथर्व-वेदस्य "यस्मादृचोऽपातक्षन्-अथर्व्वाऽङ्गिरसो मुखम्"-इति उपन्यस्तम्, सर्वमिदं छलनमात्रमेव । परमेश्वरो हि "नित्यो नित्यानां चेतनश्चेतनानाम्" इति नित्य भूः, अङ्गिरा ऋषिस्तु उत्पद्यमानत्वात् न नित्यः गोपथब्राह्मणे ब्रह्मणः सकाशात्-अङ्गिरसः उत्पत्तेः दर्शनात् उत्पत्तिमतश्चाऽनित्यत्वस्वभावच्च ।

इति सर्व्वोऽप्यमर्थः विशदीकृत्य-प्रस्तूयतेऽधस्तात्—

मुग्धोहि वृक्षे शाखाग्रस्थितः कुठारेण तन्मूलं कृन्तन्नाऽऽत्मानं जानाति, सैवाऽत्र दशा महर्षेस्तदनुयायिनाञ्च , तद्यथा "तस्माद्यज्ञात्" ऋचः सामानि जज्ञिरे, छन्दांसि जज्ञिरे" इति यजुः मन्त्रेण छन्दः पदेन अथर्ववेदाऽर्थं गृह्णन् "यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन्-सामानि यस्य लोमानि अथर्व्वाङ्गिरसो मुखम्" इति अथर्व्वमंत्रमुद्धरति, अत्र अथर्व्वविद्यानिष्णातत्वेन अङ्गिरसे ऋषौ अथर्व-वेदत्व उपचारः, इति स च ऋषिः ब्रह्मणः सकाशादुत्पत्तेः निश्चयंपरमेश्वराद्भिन्नः कथं परमेश्वरमुखं भवितुमर्हति, अजन्यत्वेन परमेश्वरस्य नित्यत्वात्, ऋषेश्च ब्रह्मणोजातत्वेन-अनित्यत्वात् इदमन्यत् अपि प्रवञ्चनम्-यत् कुत्रचित् याजुष-मन्त्रेण छन्दांसि पदेन अथर्ववेद-कथनं-कुत्रचित् तच्छद्मनिगूहितुं अथर्वमंत्रमाश्रित्य अथर्वाङ्गिरसः पदेन चतुर्थस्य अथर्ववेदस्य साधनम्, यावता यजुर्मंत्रोक्त त्रयो निर्देशेनैव स्वभावतःचतुर्थस्य अथर्ववेदस्य बोधः सहजः, तथाहि-अथर्वाङ्गिरसौ हि न परमेश्वरौ, अपितु ऋषी परमेश्वराद्भिन्नौ, गोपथ ब्राह्मणे स्पष्टम् "अशरी-रया वाचा उक्तत्वात् अथर्व्वाऽस्योऽप्यभवत्" ब्रह्मणः सर्व्वेभ्योऽङ्गेभ्यः रसोऽ-क्षरत् सोऽङ्गरसभूतत्वात् अङ्गिरामहर्षिरभवत्" ततः एकर्च द्व्यृचादि द्रष्टारो





विंशति संख्याका अथर्व्वाणोऽङ्गिरसश्चोत्पन्नाः तेभ्य सकाशात् स्वयम्भू ब्रह्म ( कार्यतामापन्नं ) यान् मंत्रान् अद्राक्षीत् सोऽथर्व्वाऽङ्गिरः शब्दवाच्यो वेदोऽभवत्" इति हि स्पष्टं उभावपि ऋषी "तस्माद्यज्ञात्" इति यजुमन्त्रोपात्त तच्छन्द वाच्य परमेश्वराद्भिन्नौ एव, अयमेवाऽर्थः मुण्डकोपनिषदा अक्षरशः स्पष्टीकृतः "ब्रह्मा देवानां प्रथमः सम्बभूव"......स सर्वविद्याप्रतिष्ठां अथर्वाय ज्येष्ठपुत्राय प्राह".... अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्यां—स भारद्वाजाय" इति स्पष्टं वंशपरम्परा-ऽनुगत पितृपुत्रभावनिद्देशपूर्वकं यजुःमंत्रोक्ततच्छन्दवाच्य—ब्रह्मणः, अङ्गिरसो भिन्नत्वमिति एकस्मादेवो त्पत्तिसाधनं **महर्षेर्वेदानामभिन्नत्वमेव विशुद्धस्य च ।** चेत् कार्य्यकारणयोः एकधर्मतामाश्रित्य सङ्गतिरिष्टा, तदा तु दयानन्दस्य तत्पितुर्मातुश्च सर्व्वेषां ब्रह्मकार्य्यत्वेन वर्णसाङ्कर्यमेव स्यात् ।

एवम्—अथर्ववेदद्रष्टृणां ऋषीणां ब्रह्मकार्यरूपत्वेऽपि सर्वथा भिन्नत्वमेव । तथा च गीतायाम्—अ० १० श्लो० ६, "महर्षयः सप्तपूर्वे चत्वारो मनवस्तथा-मद्भावा मानसा जाता-येषां लोक इमाः प्रजाः" अत्र जाता इति पदं कार्य्यत्वदर्शनेन परमेश्वरात् सर्वथा भिन्नतां कथयति। अत्र सरलार्थं टीका काराणां भावाः—१. महर्षयः सप्त भृग्वादयः, अतीतकालसम्बन्धिनश्चत्वारो मनवः, **इतिशङ्करः** । २. भृग्वादयो वशिष्ठान्ताः सर्वज्ञा विद्यासम्प्रदाय प्रवर्तकाः, **इत्यानन्दगिरिः** । ३. सप्त भृग्वादयः चत्वारः सनकादयः, **इति-नीलकण्ठः** । ४. महर्षयो वेदतदर्थद्रष्टारः सर्वज्ञाः विद्यासम्प्रदायप्रवर्त्तकाः सर्गाऽद्यकालाऽविर्भूताः "भृगुमरीचिमत्रिञ्च पुलस्त्यं पुलहंक्रतुम्-वशिष्ठञ्च महा-तेजा सोऽसृजन्मनसा सुतान्" मत्त एव हिरण्यगर्भात्मनो जाताः, इति **मधुसूदनः** । ५. विष्णुपुराणोक्त "भृगुमरीचिमत्रिञ्च" मया मनसोत्पादिताः सन्तः जाताः, **इति भाष्योत्कर्षदीपिका** । ( अत्र मनसोत्पादिता जाताः इति पाठः "वाक्च मनश्च वर्त्तन्यौ" इति-गोपथब्राह्मणोक्तं अनुवदति-यतः अथर्ववेदेन मनसः द्वितीयाऽर्ध-भागस्य पूरकत्वं वक्ति ) । ६. सप्तमहर्षयो भृग्वादयः मद्भावा मदीयो भावः प्रभावः येषु ते हिरण्यगर्भात्मनो ममैव मनसः संकल्पमात्राज्जाताः, **इति श्रीधरः** ।

इत्थं सर्वतो भावेन तस्माज्जातानां ऋषीणां परमेश्वरदाद् भिन्नत्वं अव्या-हतम्-परन्तु दयानन्दस्तु सर्व्वानिवाऽतिशेते यः सर्व्वशास्त्रं अक्ष्णोरलक्ष्यीकृत्य अर्थाऽनर्थकरणे कटिबद्धः ।

अथायमपरो वज्रपातः यत् आर्यसामाजिकानां महर्षिर्वेदानां नित्यत्व-मनुजानन्नपि परमेश्वरादुत्पन्नान्मन्यते, यत्र मूर्खोऽपि जानाति यत् उत्पत्ति-

मात् सर्वोऽपि पदार्थः अनित्यो भवति इति। अथ च ऋग्वेदे भगवोऽध्येमि सामवेदमाथर्वणं चतुर्थं "मिति छान्दोग्यादि पाठ-दर्शनेनैव वृत्तिरूप-स्यास्य भावमजानन् यजुर्मन्त्रे च त्रय्या निर्देशात्, त्रुटिं मत्वा छन्दांसि पदेन पूरयितुं प्रवर्तमानः आत्मानं निरुक्ताऽऽचार्यत्वेन ख्यापयति, परमिदं सर्व्वमज्ञानविजृम्भितम्। त्रय्या एव अथर्वाख्यस्य स्वभावत एव गताऽर्थत्वात्, तस्या एव मूलभूतत्वाच्च "त्रयी विद्याऽख्या च तद्विद्धि" मी. सू. ३-३-५ एवमेव "एवं त्रयीधर्ममनुप्रपन्नाः" इति च। न चैवं चतुष्टयी-विरोधः इति चेन्न ऐहिक कर्मप्रधान भूतेऽथर्ववेदे त्रयीगत मन्त्र संहतेः एव तच्छरीरत्वात् वेदार्थभूत पुराणशास्त्रैः प्रमाणितत्वाच्च।

तदेतत् सप्रमाणं विशदीकृत्यं दर्श्यते तथा हि "तस्माद्यज्ञात्" इति यजुः मन्त्रे न साक्षात् अथर्वनामोपलब्धिः अपितु तस्य त्रय्या एव गतार्थत्वम् छन्दः पदं तु वेद सामान्यवाचकमेव, "अथर्वाऽङ्गिरसोमुख" मित्यथर्वमन्त्राश्रयस्तु निमज्जतस्तृणाऽवलम्ब एव महर्षेः।

तथा हि—अथर्वविद्या प्रकाशस्तु नाभिकमलोद्भूतब्रह्मणः- तद्भिन्न अङ्गिरोगोत्रिणः अथर्वणः सकाशादेव, अत्र गोपथ ब्रह्मणम्—अथर्व्वाऽऽख्यऽयन ब्रह्मणा दृष्टत्वात्तन्नाम्ना अयं वेदो व्यपदिश्यते".

पुरा खलु सृष्ट्यर्थं स्वम्भुर्ब्रह्म तपस्तेपे, तस्मात्तप्यमानात् सर्वेभ्यो रोम-कूपेभ्यः स्वेदधारा अजायत्, तासु स्वेदधारासु अप्सु स्वां छायां पश्यतो रेतः चस्कन्द, तद्रेतः सहिताआपोद्विरूपा अभवन्, तत्रैकतः स्थितं रेतः भृज्यमानं सत् भृगुर्नाम महर्षिरभवत्। स एव भृगुः स्वोत्पादकस्य तिरोहितस्य ब्रह्मणो दर्शनाय "अथर्वाग् एनं एतास्वेवाप्सु अन्विच्छ" गो. प. ब्रा. १-४ इति अशरीरया वाचा उक्तत्वात् अथर्व्वाख्योऽपि अभवत्। अवशिष्टरेतोयुक्ताभिरद्भिरावृतस्य वरुण शब्दवाच्यस्य ब्रह्मणस्तप्तस्य सर्वेभ्योऽङ्गेभ्यो रसोऽक्षरत्। सः अंगरसभूतत्वात् अङ्गिरा नाम महर्षिदभवत्। ततस्तत्कारणं ब्रह्म तं अथर्वाणं आङ्गिरसं चाऽभ्ययातत्। ततः एकर्च द्वयृचादि द्रष्टारो विंशति संख्याका अथर्वाणो-ऽङ्गिरसश्चोत्पन्नाः। तेभ्यस्तप्तेभ्यः ऋषिभ्यः सकाशात् स्वयम्भुर्ब्रह्म यान् मंत्रान् अद्राक्षीत् "सोऽथर्व्वाङ्गिरः शब्दवाच्यो वेदोऽभवत्" इत्थं स्पष्टमेव ऋग्यजुः साम्नां प्रकाशः यजुर्मन्त्र "तस्माद्जज्ञात्" वाच्याद् परमेश्वरात् भिन्नः, तथा अथर्ववेदस्य पुनः मन्नाम ऋषेः सकाशात् इति को नाम श्वदद्ध्यात् शास्त्रानभिज्ञवचसि।





अन्यच्च मंत्र द्रष्टॄणां ऋषीणां विंशतिसंख्याकत्वेन अस्य वेदस्य विंशति-काण्डात्मकत्वं उक्ततथ्ये परं प्रमाणम्। अथाऽपि "वेदैरशून्यैस्त्रिभिरेति सूर्यः" इतिश्रुतिः। "यं ऋषयस्त्रयीविदाविदुः", "ऋचः सामानि यजूंषि" तै. ब्रा.। त्रिभिर्वेदैः यज्ञस्याऽन्यतरः पक्षः संस्क्रियते, तथा त्रयी निष्पाद्यः एकः पक्षः मनो निष्पाद्यः परः पक्षः इत्यैतरीय ब्रा., त्रयोवेदा अजायन्त ऋग्वेदः एव अग्नेरजायत-यजुर्वेदो वायोःसामवेद-आदित्यात् "ए. ब्राह. ५-३२ ( इत्यादिभिः ) अनन्तैः प्रमाणवचनैः त्रय्या एव प्राधान्यम्।

अथ च परिशिष्टे अत एव वाङ्मनसा निर्वर्त्यस्य यज्ञशरीरस्य अर्द्धमेव त्रिभिर्वेदैः निष्पाद्यते, अर्द्धाऽन्तरं तु अथर्व्व-वेदेनैव" तत्र ऋचा हौत्र-यजुषाऽध्वर्यत्वं साम्नोद्गात्रं-अथर्वाङ्गिरोभिः ब्रह्मत्व,मित्युपक्रम्यत्रयी निष्पाद्यः एकः पक्षः मनो निष्पाद्यः परः पक्षः, अस्य च यज्ञस्य "वाक् च मनश्च वर्त्तन्यौ" वाचा च हि मनसा च यज्ञोऽवर्त्ततः। "इयं वै वाक् अदो मनः, तद् वाचा त्रय्या विद्यया एवं पक्षं संस्कुर्वन्ति मनसैव ब्रह्मा संस्करोति, इत्यैत्तरीये स्पष्टो भेदः प्रदर्शितः।

तस्मात् "वाचा विरूप नित्यया" इति सर्व्वसम्मतेन च मार्गेण "तस्माद्-जज्ञात्' इति मंत्रे द्वे विद्ये वेदितव्ये इति मुण्डक संकेत संकेतितायाः त्रय्या एव विद्याया निर्देशः, नतु छन्दः पदकल्पितस्य अथर्ववेदस्य। अथ मन्त्रसारः—त्रयी विद्या वाग्रूपा अस्ति, अथर्ववेदस्तु मनोरूप वर्त्तिनीत्वेन सर्वथा त्रयी साधर्म्याद् भिद्यते एव। इदं पुनः अन्यदपि—रहस्यमत्र निहितम्=तथाहि—विद्याहि अक्षर ( परमाऽनन्द ) प्राप्तिमूलभूता, अविद्या च क्षर ( नश्वरानन्द ) प्राप्ति मूलरूपा, तत्र ऋग् यजुः सामरूपात्रयी ईश्वरोपास्तिक्रमेण परारूपा, अथर्वगता तु पुनः सर्वाऽऽत्मना ऐहिक अभिचारादिकर्मप्रधानभूतत्वात् अपरारूपैव इति अथर्ववेदस्य त्रयीवै जात्यमेव, अत एव यजुर्मन्त्रे अथर्ववेदस्य साक्षान्नाम्ना निर्देशः न कृतोऽस्ति।

यद्यपि "स्वर्गकामो यजेत" इत्यादिना त्रयी विधेरपि क्षर प्राप्तिः इति को भेदः, तन्न "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वं किल्बिषैः" "यज्ञेन यज्ञ मयजन्तदेवाः", "तस्मादसक्तः सततं कार्यं कर्म समाचार" "परमाप्नोति पूरुषः "इत्यादिना निष्कामतया त्रयी विहितं कर्म्म परमपुरुषार्थमूलमेव। परन्तु अथर्व-वेदस्य तु शत्रुमारणोच्चाटनादिविधि प्रधानत्वेन सर्वांशतः ऐहिक कर्म्मफलसाधन-रूपत्वात् आमुष्मिक फलाऽनुपयोगित्वमेव, अतः गीतायामपि "गताऽगतं काम-कामा लभन्ते" इति यथा त्रयी विहितं कर्म ईश्वरार्पितं परा विद्यास्वरूपमस्ति

तथा अथर्व विहितं उच्चाटनादि सर्वात्मना सकामं कर्म कथं परा विद्याश्रेणीं ईयात्, इति सोदाहरणं सप्रमाणं साध्यते—

यद्यप्येवम्—तथापि जनजीवन साधारणोपयोगिकर्म्मानुष्ठानस्य व्यवहार-सत्तायां विशेषतः साकांक्षतया अथर्वोपयोगस्य सर्वथा तथैव महत्त्वं परन्तु त्रयी इव नाऽस्य परात्वं, अपितु अपरात्वमेव, इति उक्त याजुषे छन्दः पदेन अथर्व-वाच्यत्वं कपोलकल्पना एव ।

ऐहिकाऽमुष्मिक रूपे द्विविधे कर्ममार्गे "जज्ञेन जज्ञमयजन्त देवाः" "वसन्तोऽस्यासीदाज्यम् ग्रीष्म इध्मः शरद्धविः, यद्यज्ञं तन्वान्ना अबध्नन् पुरुषं पशुम्" इत्यादिभिः मोक्षप्रकृतिभूताऽमुस्मिकम कर्मविधिः-निर्देशः श्रूयते, येन त्रय्या विद्यायाः परात्वं व्यवतिष्ठति । एवं न तथा अथर्ववेदस्य सहजा प्रकृतिः पराविद्यास्वरूपा, प्रत्युत अपरा रूपैव, जीवनाऽनुगुण शान्तिक-पौष्टिक राजकर्म-अभिचारकर्म-तुलापुरुष महादानादिरूप ऐहिककर्मप्रधानत्वात् ।

विष्णुपुराणे-पौरोहित्यं अथर्वविदेव कार्यम्, इति प्रसह्य निर्दिष्टम्, तथा पुरोहितकर्तृककर्म्मणां राजाऽभिषेकादीनाञ्चाऽपि तत्रैव सङ्केतः "पौरोहित्यं शान्तिकपौष्टिकानि ... राज्ञां ....अथर्ववेदेन कारयेदित्यादि । तथा....भट्टाचार्या अपि "शान्तिः पुष्टयाभिचाराऽर्थाः-एक ब्रह्मर्त्विगाश्रयाः क्रियन्तेऽथर्ववेदेन,त्रय्-येवात्मीयणोचराः ।" श्रीमद्भागवतसंहितयाञ्च—१२ स्कन्धे. ६ अध्याये जन-मेजय द्वारा पितरि परीक्षिते तक्षकेन दष्टे सति तातशत्रूणां नागानां अभिचारयज्ञे —"यथा जुहाव संक्रुद्धः—इत्युपक्रम्य "उवाच तक्षकः कस्मान्न बह्योतोरगा-धमः—विलोक्याङ्गिरसः प्राह राजान" मिति अथर्वज्ञानां आङ्गिरसां आथ-र्वणानां अभिचारादिसु परतरः समवायः । तथा नीतिशास्त्रेपि—"त्रय्याञ्च दण्ड-नीत्याञ्च कुशलः स्यात्पुरोहितः-अथर्वविहितं कर्म्मं कुर्याच्छान्तिक पौष्टिकम् ।"

मत्स्ये च—"पुरोहितं तथाऽथर्व्वमन्त्रब्राह्मणपारगम् ॥"

मार्कण्डेये च—"अभिषिक्तोऽथर्वमन्त्रैः महीं भुङ्क्ते ससागराम् ।"

अथर्वपरिशिष्टेऽपि यथा—यस्य राज्ञो जनपदे अथर्व्वा शान्तिपारगः-निवसत्यपि तद्राष्ट्रं वर्द्धते निरुपद्रवम् ।" तस्माद्राजाऽविशेषेण अथर्वाणं जितेन्द्रियम् इत्यादिभिः अथर्ववेदस्य ऐहिकोपयोगिकर्म्मप्रधानतया अपराविद्यारूपेण प्रतिपादनात् त्रय्यपेक्षं सर्वथा वैजात्यम् ।

एवं पूर्वप्रदर्शित—"पौरोहित्यं शान्तिक-"अभिचाराऽर्थाः—क्रियन्तेवंऽथ-र्ववेदेन, "कुशलः स्यात्पुरोहितः-अथर्वविहितं....शान्तिक, पुरोहितं....अथर्व-





पारगम्, अथर्वाशान्ति....निवसति....तद्राष्टं वर्द्धते, इत्यादि पुराणनीतिवेदपरि-शिष्टबलात् अथर्वस्य पुरोहितस्य च विगीतत्वमेव अनुज्ञातमस्ति, भागवते तु स्पष्टमेव भा. स्क. ६.७.३५. विश्वरूपसम्वादे "विगर्हितं धर्मशीलैर्ब्रह्मवर्चं उपव्ययम्"..... "कथंविगर्ह्यंनु करोम्यधीश्वराः-पौराधसं दृश्यति येन दुर्मतिः" इत्थमेतज्जातीय-प्रधानकर्मणां प्रतिपादकः अथर्ववेदः त्रयीतः—असमानान्तर एव ।

अपि च ऐतरीयेऽपि अथर्वस्य त्रय्यामेवान्तर्भावं अनुज्ञाय त्रयी प्रधान एव—निर्देशाः, तथा विद्यात्वेन परात्वेन वा निदर्शनम् । एव अथर्वाङ्गिरसो वेदस्य अथर्वस्य हि, न तावत् मोक्षोपयोगिपराविद्यात्वेन त्रय्याः साजात्यं संभवि, तत्र प्राधान्येन राष्ट्रीय जीवनोपयोगिसाधनमात्रतया मारणोच्चाटनशान्तिकपौष्टिकादि कर्मस्वेव उपयोगात् ।

यत्र तु त्रयी—साम्ये, वेदचतुष्टयीविरोधप्रश्नः, सोऽपि निर्मूल एव, "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्" इति छान्दोग्याऽर्थस्य भागवतसंहितायां कृष्णद्वैपायनेन सरलीकुर्वता "ऋग्यजुः सामाऽथर्वाख्यान् वेदान् पूर्वादिभिर्मुखैः शास्त्रमिज्या स्तुति—स्तोमं प्रायश्चित्तं व्यधात् क्रमात् ३—१२—३७ स्पष्ट प्रतिपादितत्वात् । एवं स्पष्टमेवाऽत्र यजुर्मन्त्रगत ( तस्माद्यज्ञात्.... जज्ञिरे ) तस्मादिति तच्छब्दवाच्यात् परमेश्वरात् भिन्नं तन्नाभिकमलोद्भूत-द्वितीयपुरुषात् ब्रह्मणश्चतुर्थान्मुखात्—अथर्ववेदोत्पत्युपलब्धेरनौन्यात् ।

इदमन्यद्रहस्यम्—"यदृचोऽधीते पयसः—कुल्याः, यद् यजूंषि— घृतस्य, यत् सामानि सोम, यदथर्व्वाङ्गिरसो मधोः" ते. ब्रा. २—१० वचनेन त्रय्याः पयोघृतसोमरूपत्वेन एकजातीयत्वं, अथर्वाऽङ्गिरसः मधुस्व प्रकृतिसाम्येन भिन्नत्वं निर्विवादमेव ।

**इत्थम् अयं निष्कर्षः**—अथर्ववेदस्य छान्दोग्याऽद्यनुमत चतुष्टय्यन्तः पातित्वे न विरोधः परन्तु "तस्माद्यजुः....छन्दांसि जज्ञिरे" इति यजुः मंत्रोक्त छन्दः पदेन अथर्ववेदस्य ग्रहणं दयानंद विशुद्धानंद गुरु-शिष्ययोरुभयोरेव कपोलकल्पनं वञ्चनं शास्त्रानभिज्ञत्वञ्च दर्शयति ।

अथ च—"इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे"—त्रयी विद्यायाः ऐहिक-आमुस्मिकोभयरूपफलसाधनत्वमिव अथर्ववेदस्य न तथात्वम्—पर्वं सूत्रितमिव उदाहरणरूपेण पुनः सरलीक्रियते ।

अथर्वप्रयुक्तविद्याया सर्वथा ऐहिकोपयुक्तकर्मसु प्रयोगदर्शनात्, पराऽपर विद्या साधर्म्यधिया त्र्यपेक्षया अवरत्वमेव, यथा म. भा. कर्ण. प. ६९ अध्याय

एकदा कर्णशौर्यत्रस्तः पार्थः रणात्पलाय्य युधिष्ठिरमुपगतः लज्जास्पदमिदमव-लोक्य, पार्थ ! इति सम्बुद्धय विशिष्टैः वाक्यै र्भंशितः—"राधेयमेतं यदि नाद्य शक्तः चरन्तमुग्रं प्रतिबाधनाय—प्रयच्छाऽन्यस्मै—गाण्डीवमेतदद्ययोऽस्त्रै-रभ्यधिको वा नरेन्द्र" इत्थं गाण्डीवरूपाऽपमानमसहमानेन अर्जुनेन ज्यायसो भ्रातुर्युधिष्ठिरस्य वधः प्रतिज्ञातः, इत्थमुभयतः पाशारज्जू इति न्यायसम्पाते श्रीकृष्णेन-समाधानधिया असत्यादि भाषणस्याऽपि "राजनीत्यां धर्मत्व" मुपदि-शता अर्थर्वाङ्गिरो विद्यायाः ऐहिकत्वं अपरात्वं वा प्रमाणितम् । यथाहि पार्थ-स्य युधिष्ठिरवधप्रतिज्ञा—युधिष्ठिरस्य च जीवनरक्षा उभयं सम्पद्येत स मार्गः-प्रदर्शितः । तत्राऽयं विधिः-"त्वत्तो वधं नार्हति धर्मपुत्रः त्वया प्रतिज्ञाऽर्जुन पालनीया-जीवन्नयं येन मृतो भवेद्धि तन्मे निबोधेह तवाऽनुरूपम् ॥" इत्युत्क्रम्य "यदा मानं लभते माननार्हि-स्तदा स वै जीवति जीवलोके । यदाऽवमानं लभते महान्तं तदा जीवन्मृत इत्युच्यते सः ॥" अतः "त्वमित्यत्र भवन्तं हि ब्रूहि पार्थ युधिष्ठिरम्-त्वमित्युक्तो हि निहतो गुरुर्भवति पार्थिव" यतश्च "अथर्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः" अविचार्यैव कार्यैषा श्रेयः-कामैः नरैः सदा" इति सुतरां स्पष्टमेव अथर्वाङ्गिरसो वेदस्य ( अथर्ववेदस्य ) प्रधानं लौकिकं कर्म ।

अथेदमन्यदप्यवधारणीयम्-यत् सामाजिकाः हि पुराणग्रन्थेभ्यः मृत्योरिव बिभ्यन्ति, नैतज्जानन्ति यत् पुराणानि साक्षात् वेदार्थभूतानि सन्ति, "इतिहास पुराणाश्च पंचमो वेद उच्यते" अथ "इतिहासपुराणाभ्यां वेदाऽर्थमुपबृंहयेत्" गीतायां तु स्पष्टमेवेदं पुराणं नाम साक्षात् परमेश्वरस्य स्मर्यते, "अजो नित्यः-शाश्वतोऽयं पुराणः,-कविं पुराणमनुशासितारम्—आदित्यवर्णं तमसः परस्तात् इति, पुराणवेदवचनै रथर्वस्यैहिकत्वं साधितमेव, चेत् "तुष्यतु दुर्ज्जनन्यायेन, इतोऽपि न संतुष्टिः, तदा सूत्रग्रन्थप्रमाणं अपि विन्यस्यते, तदित्थम् ।

—हृद्रोग कामलादिरोगशान्तये रक्तवृषभरोममिश्रोदकं पाययेत् । खद्वायां-चोपविश्य तद्धः शुक, काष्ठशुके गोपीतनकाऽख्यानां पक्षिणां सव्यजङ्घायां हरितसूत्रेण आबन्धनम्, तत्र कौशिकसूत्रम्—"अनुसूर्यं" मिति मंत्रोक्तस्य लोम-मिश्रं आचामयति" कौ. सू. ४—२११

२. श्वेतकुष्ठाऽपनोदनाय भृङ्गराजहरिद्रा-इन्द्रवारुणी-नीलिकापिष्ट्वा शुष्कगोमयेन श्वित्रप्रदेशं आलोहितदर्शनं प्रघृष्य लेपयेत्, अत्र सूत्रम् "नक्तं जाता, १—२३" सुपर्णोजातः, १-२४ शकृता आलोहितं प्रघृष्य आलिम्पति, पलितान्याच्छिद्य मारुतान्यपि हितः, कौ. ४-२





३. अभिचारकर्मणि खदिरोत्थाश्वत्थमणिं संपात्य अभिमंत्र्य बध्नायात्-कौ. सू., "ते धराञ्चिः" अत्र मंत्रपाठश्च-मंत्रस्वरूपम्-"पुमान् पुंसः परिजातोऽ-श्वत्थखदिरादधि-स हन्तु शत्रून् मामकान् यानहं द्वेष्मि ये च माम्" अथर्वः का. ३ अनु. २, सू. ६ ।

४. ऐहिकादि ज्वरशान्तये—च-"यदग्निरिति जपति परशुं तापयति, क्वाथयति, अवसिंचति, कौ. सू. ४-२

५. शत्रूत्सादने "वित्यपनोदनानि फलीकरण तुषवत् क्षणानि" कौ. सू. २-५

६. तथा शत्रुनिर्मूलने "आरे य एनं परिषीदन्ति आयुधदण्डेन दिष्ट्यामुखं पिधाय संविशन्ति" कौ. सू १-२६, तथा ६-७६ ।

इत्यादय सर्वे विधयः ऐहिकसाधनरूपाः अपरां विद्यामनुवदन्ति ।

कौशिकस्य महर्षेरेवाऽथर्ववेदविद्या सु स्वतन्त्रः अधिकारः इति भागवतसंहि-तायां वेदव्यसनशीलेन श्रीव्यासेन अक्षरशः पुष्टीकृतम्-"इमां विद्यां पुरा कश्चित् कौशिको धारयन् द्विजः" भा. ६-८-३८ इति मारणोच्चाटनाङ्गिराप्रत्यङ्गिरा विद्या बिभवसम्पन्नस्य कौशिकस्य प्रसिद्धेः अथर्ववेदोक्ताऽ भिचारादिविधीनां च कौशिकसूत्रप्रणेतुः समानकर्तृकत्वसम्बन्धेन तेषां सर्वेषां विधीनामथर्ववेदे एव दर्शनात् अस्य वेदस्य कौशिकसूत्रं मिथः प्रमाणयति ॥ **इति सिद्ध, अथर्ववेदस्य ऐहिकोपयोगितया अपराविद्यात्वम्, तथा ऋग्यजुःसामरूपत्रयी पराविद्यातो वरत्वम् ।**

यद्यपि मुण्डके "तत्र अपरा ऋग्वेदः यजुः साम अथर्ववेदः" इति अपरासु परिगणनात् समानत्वमायाति, तथापि त्रयी प्रतिपादितयज्ञादीनां वस्तुतः कर्म्म-बन्धनमोक्षकारित्वमेव । तथा च गीतायाम् ३-अध्या. "लोकेऽस्मिन् द्विविधा निष्ठा, इत्युपक्रम्य- न कर्म्मणामनारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते, यज्ञाऽर्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः, मुक्तसङ्गः समाचर, कर्मं ब्रह्मोद्भवं विद्धि, तस्मात्सर्वगतम्ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्, तस्मादसक्तः सततं कार्यं कर्म समा-चार, असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः" इत्यन्तेन त्रयी प्रतिपादित-कर्मणां परालक्ष्यप्राप्तियोग्यतावत्वमेव । परन्तु अथर्वप्रतिपादिताभिरा-दिलौकिकजीवनमात्रफलानां न तावत् परान्तः कोटित्वं सम्भवति, त्रय्यास्तु— **"सर्व्वगतं ब्रह्म नित्यं यज्ञे, यज्ञशिष्टाशिनः संतु मुच्यन्ते सर्वकिल्विषैः" इति विधया अथ मुण्डकीय "अथ परा ययाऽक्षरमधिगम्यते" सिद्धान्तसहकृतेन यथा सर्वथा पराविद्यात्वं सहजसिद्धमेव । इति ।**

